# राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक – पुरातत्त्वाचार्य जिनविजय मुनि
[ सम्मान्य संचालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर ]



– ग्रन्थाङ्क ७ –

मौनिश्रीकृष्णभट्ट-विरचिता

# वृत्तिदीपिका



— प्र का श क —

राजस्थान-राज्य-संस्थापित

राजस्थान पुरातत्त्वान्वेषण मन्दिर

( Rajasthan Oriental Research Institute )

जयपुर ( राजस्थान )

मौनि श्रीकृष्णभट्ट विरचिता

# वृत्तिदीपिका



सम्पादक

शुद्धाद्वैतालंकार साहित्याचार्य श्रीपुरुषोत्तम शर्मा चतुर्वेदी



—: प्रकाशनकर्त्ता :—

राजस्थान-राज्याज्ञानुसार

संचालक-राजस्थान पुरातत्त्वान्वेषण मन्दिर

( Rajasthan Oriental Research Institute )

ज य पु र ( रा ज स्था न )

[ विक्रमाब्द २०१३ ] प्रथमावृत्ति  मूल्य [ खिस्ताब्द १९५६

## प्रकाशकीय वक्तव्य

राजस्थान में प्राचीन काल से भारतीय संस्कृति की अधिष्ठात्री अमरवाणी संस्कृत के विकास के अनेक प्रयत्न होते रहे हैं जिनके फलस्वरूप भारतीय गौरव गरिमा का प्रतीक विपुल साहित्य विभिन्न भण्डारों में प्राप्त हो रहा है। राजस्थान राज्य द्वारा संस्थापित राजस्थान पुरातत्त्वान्वेषण मन्दिर Rajasthan Oriental Research Institute का एक प्रधान उद्देश्य ऐसे महत्त्वपूर्ण साहित्य को प्रकाश में लाने का है।

राजस्थान के प्रसिद्ध संस्कृतज्ञ विद्वान् शुद्धाद्वैतालंकार साहित्याचार्य श्री पुरुषोत्तमजी शर्मा चतुर्वेदी ने अपनी बातचीत में मौनि श्रीकृष्णभट्टविरचिता वृत्तिदीपिका की प्रति अपने पास होना सूचित किया तो हमने पुस्तक को उपयोगी जानकर राजस्थान पुरातन ग्रन्थमाला में प्रकाशित करने का निश्चय किया जिसके फलस्वरूप यह रचना उपर्युक्त ग्रन्थमाला के ७ वें पुष्प के रूप में प्रकाशित की जा रही है।

संस्कृत में विभिन्न आचार्यों द्वारा वृत्तिनिरूपण विषयक प्रचुर साहित्य लिखा गया है। प्रस्तुत रचना राजस्थान में टोड़ारायसिंह अर्थात टोंक टोड़ा नामक स्थान से प्राप्त हुई है और इसमें वृत्तिविषयक विविध मतों का सुन्दर निरूपण किया गया है।

आशा है कि सम्बन्धित विषय के विद्वान् और विद्यार्थी इस प्रकाशन से लाभान्वित होंगे। इति।

मुनि जिनविजय,
सम्मान्य संचालक,
राजस्थान पुरातत्त्वान्वेषण मंदिर,
जयपुर।

जयपुर,
ज्येष्ठ कृष्णा ८,
वि० सं० २०१३।

# राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक – पुरातत्त्वाचार्य जिनविजय मुनि

[ सम्मान्य संचालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर ]




– ग्रन्थाङ्क ७ –

मौनिश्रीकृष्णभट्ट-विरचिता

# वृत्तिदीपिका




— प्रकाशक —

राजस्थान-राज्य-संस्थापित

## राजस्थान पुरातत्त्वान्वेषण मन्दिर

( Rajasthan Oriental Research Institute )

जयपुर ( राजस्थान )

वि० सं० २०१३ ] [ मूल्य

# राजस्थान पुरातन ग्रन्थमाला

## प्रकाशित ग्रन्थ

१ प्रमाणमञ्जरी – तार्किकचूडामणि सर्वदेव। २ यन्त्रराजरचना – महाराजाधिराज जयसिंहदेव कारिता। ३ कान्हडदे प्रबन्ध – महाकवि पद्मनाभ। ४ क्यामखांरासा – नवाब अलफखां ( कविवर जान )। ५ लावारासा – चारण कविया गोपालदान। ६ महर्षिकुलवैभवम् – विद्यावाचस्पति स्व. श्री मधुसूदनजी ओझा। ७ वृत्तिदीपिका – मौनि कृष्णभट्ट।

## प्रेस में

त्रिपुराभारतीलघुस्तव – सिद्धसारस्वत लघुपण्डित। २ बालशिक्षा व्याकरण – ठक्कुर संग्रामसिंह। ३ करुणामृतप्रपा – महाकवि ठक्कुर सोमेश्वरदेव। ४ पदार्थरत्नमञ्जूषा – पं. कृष्णमिश्र। ५ शकुनप्रदीप – पं. लावण्यशर्मा। ६ उक्तिरत्नाकर – पं. साधुसुन्दर गणी। ७ प्राकृतानन्द – पं. रघुनाथ कवि। ८ ईश्वरविलासकाव्य – पं. कृष्णभट्ट। ९ चक्रपाणिविजयकाव्य – पं. लक्ष्मीधर भट्ट। १० काव्यप्रकाश – भट्ट सोमेश्वर। ११ तर्कसंग्रहफक्किका – क्षमाकल्याण गणी। १२ कारकसंबन्धोद्योत – पं.रभसनन्दी। १३ शृंगारहारावलि – हर्षकवि। १४ कृष्णगीतिकाव्यनि – कवि सोमनाथ। १५ नृत्यसंग्रह – अज्ञातकर्तृक। १६ नृत्यरत्नकोश – महाराजाधिराज कुंभकर्णदेव। १७ नन्दोपाख्यान – अज्ञातकर्तृक। १८ चान्द्रव्याकरण – चन्द्रगोमी। १९ शब्दरत्नप्रदीप – अज्ञातकर्तृक। २२ रत्नकोश – अज्ञातकर्तृक। २१ कविकौस्तुभ – पं. रघुनाथ मनोहर। २२ एकाक्षरकोशसंग्रह – विविधकविकर्तृक। २३ शतकत्रयम् – भर्तृहरि, धनसारकृत व्याख्यायुक्त। २४ वसन्तविलास – अज्ञातकर्तृक। २५ दुर्गापुष्पाञ्जलि – म. म. पं. दुर्गाप्रसादजी द्विवेदी। २६ दशकण्ठवधम् – म. म. पं. दुर्गाप्रसादजी द्विवेदी। २७ राजविनोद काव्य – कवि उदयराज। २८ गोरा बादल पदमिणी चऊपई – कवि हेमरतन। २९ बांकीदासरी ख्यात – महाकवि बांकीदास। ३० मुंहता नैणसीरी ख्यात – मुंहता नेणसी, इत्यादि।

प्राप्तिस्थान – सञ्चालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर।

## आवश्यकं किञ्चित्

### प्रकाशन-कथा

प्रकाश्यमानस्यास्य 'वृत्तिदीपिका'पुस्तकस्य हस्तलेखोऽस्मत्पितृचरणानां जयपुर-राज्यान्तर्गत 'टोंक-टोडा' इतिप्रसिद्ध'टोडा-रायसिंह'ग्रामवास्तव्यानां 'भटजी बाबाजी'ति विख्यातानां मिश्रजीश्रीमथुरालालजीचतुर्वेदिनां पुस्तकसंग्रहे आसीत्। अशीत्युत्तरैकोनविंशतिशततमे विक्रमवत्सरे तेषां भगवच्चरणप्राप्त्यनन्तरं पुस्तक-संग्रह-व्यवस्थां विदधानेन मया कानिचन तथाविधान्यपि लिखितपुस्तकानि तत्र लब्धानि यानि न मदीयदृष्टाववद्यावधि मुद्रितरूपेण समायातानि। तेष्वन्यतममेतदप्यासीत्। पुस्तकेऽस्मिन् जिज्ञासुजनोपयोगि वृत्तिविषयकं विविधमतसंग्रहं, शाब्दबोधादिकं च दृष्ट्वा तदानीमेव मयाऽस्य प्रकाशनमभिलषितम्। मुद्रणोपयुक्ता प्रतिलिपि(Press Copy)श्चास्य संप्रति स्वर्गसुखमनुभवता श्रीनाथद्वारवास्तव्येन मदीयशिष्येण श्रीवंशीधरशर्मणा तदैव कारिता। किन्तु कैश्चित् प्रत्यूहैः, प्रकाशकाभावेन च नापार्यत सद्यो मुद्रापयितुम्। ततश्चासन्नपञ्चविंशेभ्यो वर्षेभ्यः सेयमासीत्तथैव निष्पतिता मदीये लेखसंग्रहे।

ऐषमो लखनऊनगरेऽधिविष्टायाः प्राच्यभाषापरिषदो(Oriental Conference)ऽधिवेशनात् प्रतिनिवृत्त्य वाराणसीं समुपयातैर्जयपुरस्थराजस्थानपुरातत्त्वमन्दिरस्य संमान्यसंचालकैराचार्यश्रीमुनिजिनविजयमहोदयैः काशीराजमुद्रणालये मदध्यक्षतायां मुद्र्यमाणस्य 'महर्षिकुलवैभव'स्य विषये संलपितुमाकारितोऽहं हिन्दूविश्वविद्यालये। प्रसङ्गवशेन च तत्र पितृचरणानां हस्तलेख-संग्रह-कथा कयाऽपि विधया समायाता। तत्र प्राचीन-लेख-संग्रहप्रणयिभिर्महाभागैरेभिः सप्तदशशताब्दीलिखितस्य पुञ्जराजीयव्याख्यासहितस्य सारस्वतव्याकरणस्य वृत्तान्तमभिज्ञाय तद्दर्शयितुमहमादिष्टः। तत्प्रसंगेन मया पितृचरणसंग्रहस्थानि कतिपयानि पुस्तकानि तेभ्यः प्रदर्शितानि। यानि तै राजस्थान-पुस्तकसंग्रहार्थं जयपुरं नीतानि। अस्मिन्नेव प्रसंगे श्रीमुनिमहोदयैः सस्नेहमहमुक्तो यद् भवताऽपि किञ्चित् पुस्तकं संपाद्य प्रकाशनीयं राजस्थानपुरातत्त्वमन्दिरादिति। अथ द्वित्रमासानन्तरं जयपुरमुपयातस्य मम मुखेन प्रकृत-पुस्तक-मुद्रणप्रतिलिपि (Press Copy) कथामाज्ञाय, प्रसमीक्ष्य च तां प्रकाशनोचितां तस्याः

प्रकाशनं तैः स्वीकृतम् । लिखित आदेशश्च प्रहितोऽत्र ।सोऽयं विद्वज्जनोत्साहवर्धकानां श्रीमुनिमहोदयानामहेतुकः सस्नेहानुग्रह एवात्रोपेक्षितपतितायाः पुस्तिकायाः प्रकाशने हेतुरिति कथामिमामाकर्णयतां पाठकानां पुरस्तात्तत्कृतज्ञताप्रकाशनं पुनरुक्तमिवैव ।

प्रणेता

प्रणेता चास्य पुस्तकस्य विपश्चिदपश्चिमः श्रीकृष्णभट्टो 'मौनी'तिनाम्ना विख्याते वंशे समुत्पन्नः, श्रीरघुनाथभट्टस्य सुतः श्रीगोवर्धनभट्टस्य च पौत्रः। तदेतत् पुस्तकान्ते निविष्टया पुष्पिकया स्फुटं प्रतीयते। सिद्धान्तकौमुदीवैदिकप्रक्रियायाः सुबोधिनीटीकाकृत्तु 'मौनिज'कृष्णस्य चायमनुजः प्रतीयते*। कालश्चास्य रसगङ्गाधरप्रणेतुः पण्डितराजश्रीजगन्नाथादीषदेव पुरस्तात् स्यादित्यनुमीयते, यतस्तदव्यवहितपूर्ववर्त्तिनो ( मदीयहिन्दीरसगङ्गाधरभूमिका द्रष्टव्या )ऽप्ययदीक्षितस्य वृत्तिवार्तिकादयमुद्धरति कश्चिदंशमालोचयति च, किन्तु तत्प्रतिद्वन्द्विनं तस्यैवांशस्य समालोचने तादृशीमेव प्रणालीमवलम्बमानं च पण्डितराजं न नाम्नाऽपि स्मरति। पण्डितराजस्य च समयः शाहजेहानराज्यसमय एव [ स च १६२८ ख्रिस्ताब्दात् ( १६८५ विक्रमवत्सरात् ) १६५८ ख्रिस्ताब्दं ( १७१५ विक्रम वत्सरं ) यावत् ]। तेनास्य समयः १६८५ विक्रमवत्सरादत्यासन्न एव सिध्यति। वैयाकरणश्चायम्, यतः स्थाने स्थाने नैयायिकादीन् दूषयन् वैयाकरणसिद्धान्तं मण्डयति। संप्रति सुप्रचलितस्य वैयाकरणभूषणसारस्य प्रणेतुस्त्वयं प्राचीनः स्यात्। ततस्तदीयं वस्त्वत्र संगृहीतमित्यस्याः शङ्कायास्तु नावकाशः। 'आख्यातवादा'भिधः कश्चनापरोऽपि संदर्भ एतन्निर्मितः। यतोऽयं "विस्तरस्तु अस्मत्कृताख्यातवादे द्रष्टव्यः" ( पृ. २५ ) इति वदति।

कृत्योऽयं महाभाग इति तु साम्प्रतं न ज्ञायते। कृते प्रयासे कदाचित् परस्तात् किमप्यवबुध्येत।

---

* यतस्तदीये मङ्गलाचरणे "श्रीरामाङ्घ्रिनिषेवकः समजनि श्रीमौनिगोवर्धनः" इत्यस्यानन्तरं "रघुनाथपदारविन्दसेवावशतस्तस्य बभूव नन्दनः। रघुनाथ इतीड्यनामगम्यः" इत्यतः परं तस्य पुत्रवर्णने 'तृतीयो जयकृष्णोऽस्मि श्रीकृष्णोनाम सद्भवः।' इति संदिग्धमिव मुद्रितं महामहोपाध्यायश्रीगिरिधरशर्म-महामहोपाध्यायश्रीपरमेश्वरानन्दसम्पादिते सिद्धान्तकौमुदीपुस्तके। मुम्बईमुद्रितयोः पुस्तकयोस्तु "श्रीकृष्णायास्तु सूद्भवः" इति "श्री कृष्णायास्तनूद्भव" इति पाठौ स्तः॥

विषयः

यद्यपि 'अभिधावृत्तिमातृका'—'वृत्तिवार्त्तिका'दिप्राचीनसंदर्भनामानुगुण्येन 'वृत्तिदीपिके'ति पुस्तकनाम्ना पुस्तकमिदमभिधादिवृत्तित्रयप्रतिपादकं स्यादित्यापाततः प्रतीयते। पुस्तकस्योपक्रमश्च विदधाति साहाय्यमस्मिन् विचार-विभ्रमे, तथापि प्रथमतश्चरमं यावद् संदर्भमिममधीयानानां स्पष्टमेतद् भविष्यति यद् ग्रन्थकर्त्ता वृत्तिशब्देन न केवलं साहित्यशास्त्रप्रसिद्धं वृत्तित्रयमेव विवक्षति, किन्तु "कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः" (सि.कौ.) इति वैयाकरणाभिमताः पञ्च वृत्तीरपि संगृह्णाति। अतएवारम्भेऽभिधादिवृत्तित्रयं विमृश्य तदनन्तरं धात्वर्थादिविमर्शोऽत्र विहितः। प्रसङ्गेन च स्फोटादिविचारोऽप्युपसंहारे सङ्क्षेपेण प्रदर्शितः। तदेवमत्र साहित्यशास्त्राभिमतं वृत्तित्रयं, कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपं वैयाकरणसंमतं वृत्तिपञ्चकं, तत्प्रसङ्गेनाख्याताद्यर्थप्रतिपादनं च प्रतिपाद्यो विषय इति सुस्पष्टमेव।

लेखक-लेखनकालादि

हस्तलेखोऽयं १८२५ तमे विक्रमवत्सरे समाप्तिं प्रयातः। ४३ पृष्ठात्मकस्यास्य पुस्तकस्य पादोनपङ्क्तिद्वयन्यूनानि षट्त्रिंशत्पृष्ठान्येकेन लेखकेन, शेषपृष्ठानि त्वपरेण लेखकेन लिखितानि। सुस्पष्टं चैतत् पुस्तकस्थितैर्द्विविधैर्हस्ताक्षरैः, पुस्तकान्ते लिखितेन पङ्क्तिद्वयेन च। तद्यथा—

"॥ संवत् १८२५ वैशाखे मासि कृष्णे त्रयोदश्यां भृगौ लिखितं पुस्तकमिदमुदयभानुना स्वपठनार्थं पूर्वार्द्धं शुभरामजीकैर्लिखित्वा मह्यं दत्तं पठनार्थं॥"

सिध्यति चैनेनैतदपि यत् प्रथमलेखकस्य नाम'शुभरामजी'ति, द्वितीयस्य तूदयभानुरिति। पुस्तकं चेदमुदयभानोरधिकारस्थमिति च। किंजातीयावेतौ कुत्रत्यौ चेति तु न ज्ञातुं शक्यमेतदतिरिक्तलेखाभावात्। 'पठनार्थम्' इति लेखेन चैतदपि स्पष्टमभिज्ञायते यद् वृत्तिदीपिकाया अपि पठन-पाठन-परिपाटी प्रचलिताऽऽसीदेकोनविंशीं शताब्दीं यावत्। इदानीं तु मञ्जूषा-भूषणादिपठन-पाठनमेव प्रधानम्, अन्यदीयं तु सर्वं लुप्तमेव।

संशोधनं संपादनं च

पुस्तकान्तरालाभाद् बहुषु स्थलेष्वस्पष्टमत्यशुद्धं चाप्येकमेव पुस्तकमाश्रयताऽनुपयातमस्मदीयस्य संशोधनस्य, संपादनस्य च। अनुभविन एवैतज्जानन्ति

यदनभिज्ञलेखकहस्तलिखितेषु पुस्तकेषु कीदृशा भवन्ति प्रमादाः, कीदृशं च तेषां सशोधनं कठिनमिति । अक्षरमात्रपरिवर्त्तनेऽपि हि भवति भूयानर्थभेदो, विपर्ययश्चार्थस्य । एवंविधे स्थले कदाचित्-कदाचिदशुद्धतममपि पुस्तकान्तरं साहाय्यमादधाति संशोधने । पुस्तकान्तरालाभे तु कल्पनया संशोधनं सुविचार्य विहितमपि कर्हिचिद्—

"विनायकं प्रकुर्वाणो रचयामास वानरम्"

इत्याभाणकस्य भवति सुस्पष्टमुदाहरणम् । तेन संशोधनविषयेऽस्माभिरत्र त्रैविध्यं स्वीकृतम्—

(१) यत्र स्पष्ट एवाक्षरादिभ्रमः, प्रमादो वा लेखकस्य परिज्ञातस्तत्र पुस्तकस्याशुद्धिमयत्वेन शिरोवेदनाजनकत्वं पाठकानां मा भूदिति शुद्धपाठ एव धृतः ।

(२) यत्र तु कल्पनाबलेन संशोधनं विहितम्, तत्र बहुषु स्थलेषु निःसंशयत्वेऽपि पुस्तकस्थपाठमेव संमुद्रय, संभावितः पाठः प्रकोष्ठमध्ये ( in the bracket) धृतः ।

(३) यत्र च नासीत् कल्पनायाः प्रसरो, नासीद् वा कल्पना संतोषजनिका, तत्र तु पुस्तकस्थोऽशुद्ध एव पाठः स्थापितः । नवीनरचना त्वप्रामाणिकीति परिहृता ।

शीर्षकदानम्, अन्यदीयग्रन्थोद्धरणादिसीमानिर्धारणम्, अल्पविरामादिलेखचिह्ननिर्माणादि त्वस्मदीयमेव, किन्तु भूयोभूयः समुद्धृतानां 'जयरामा'-दिग्रन्थोद्धरणानामपरेषामपि च तत्तद्ग्रन्थानामलाभेन तत्राप्यनुमानमेव नः शरणतामुपगतमगत्या ।

कृतेऽप्येवं यथाशक्ति परिश्रमेऽक्षरयोजकानां प्रमादेन, मुद्रणसमये च्युतानामक्षराणां पुनः स्थापने यन्त्रचालकानां स्वातन्त्र्योपयोगेन, कार्यभूयस्त्वप्रयुक्तेन मदीयव्यग्रत्वेन, संशोधनपत्रेषु ( Proof ) मषीलेपनदोषेण 'व' 'बा' द्यक्षराणामस्पष्टतया, सीसकाक्षराणां त्रुटितत्वेन, भ्रमप्रमादकरणापाटवादिभिर्मानवस्य सहजैर्दोषैश्च संभाव्यतेऽशुद्धिसद्भावः । तदत्र सांप्रतं तु साञ्जलिबन्धं क्षमायाचनमन्तरा नेतरः प्रतीकारः । सद्भाग्येनास्माभिरेव संप्राप्ते पुनर्मुद्रणावसरे तु पुस्तकान्तरलाभायापि यतिष्यते, सर्वथा निरवकरतायै चेत्यलमतिप्रपञ्चितेन ।

## शुभाशिषः

अवसानेऽस्य पुस्तकस्य विषय-सूचीनिर्माणादिषु साहाय्यमाहितवते

मदीयप्रियशिष्याय साहित्याचार्य-झोपाह्व-पं०श्रीदामोदरशर्मणे शुभाशिषो वितरामि, स्वर्गीयस्य प्रतिलिपिकारस्य श्रीवंशीधरशर्मणोऽन्तरात्माऽप्यनेन पुस्तक-प्रकाशनकर्मणा परितुष्यत्विति च भगवन्तं विश्वसृजं प्रार्थये ।

रामनगरम् ( काशी)
चैत्रकृष्णा द्वितीया सं० २००८
१३-३-५२

विदुषां वशंवदः
श्री पुरुषोत्तमशर्मा चतुर्वेदः
साहित्याचार्यः, शुद्धाद्वैतालङ्कारश्च
भूतपूर्वः
राजकुमारविद्यालयस्य ( मेयोकालेज, अजमेर )
धर्म-संस्कृतविभागाध्यक्षः
वर्तमानः
श्रीकाशीनरेशीयप्रकाशन-सरस्वतीभाण्डागार-
मुद्रणालयाद्यध्यक्षः



## विषय-सूची

मौनिश्रीकृष्णभट्टविरचिता

# वृत्तिदीपिका

श्रीगणेशाय नमः ।

सजलजलदकालं सर्वलोकैकपालं
व्रजयुवतिरसालं चन्दनाभ्यक्तभालम् ।
विहतदुरितजालं विश्वराजीवनालं
विलसितवनमालं नौमि गोपालबालम् ।

## [ वृत्तिनिरूपणप्रयोजनम् ]

इह सकलजनाभिलषितमोक्षमुख्योपायात्मतत्त्वज्ञानस्य "तत्त्वमस्या"दिमहावाक्यार्थबोधजन्यत्वाच्छाब्दबोधे च वृत्तिग्रहजन्योपस्थितेर्हेतुत्वाद् वृत्तिर्निरूप्यते—

## [ वृत्तिभेदाः ]

सा च त्रिधा । शक्तिर्लक्षणा व्यञ्जना च ।

## [ वृत्तिलक्षणम् ]

वृत्तित्वं च शाब्दबोधहेतु-पदार्थोपस्थित्यनुकूल-शब्द-तदर्थसम्बन्धत्वम् । संकेतविशेषसम्बन्धेन वृत्तिपदवत्त्वं वा ।

## [ अथ शक्तिनिरूपणम् ]

तत्र शक्तिः कः पदार्थ इति चेत् । संकेतजन्यग्रहविषयम(योऽ)भिधा नाम पदार्थान्तरमिति मीमांसकाः । सङ्केतश्च एतत्पदजन्यत्वप्रकारतानिरूपितैतदर्थबोधविशेष्यताशालीश्वरेच्छा ।

## [ नैयायिकमतम् ]

नैयायिकास्तु—लाघवात्संकेत एवाऽभिधा, न तु पदार्थान्तरम् ।

न च 'गगरी'त्यादिशब्दा अपि अभिधायकाः स्युः । तथा च "न म्लेच्छितवै नाऽपभाषितवै" इत्यादिश्रुतिविरोधः । तत्र संकेतसत्त्वेपि शास्त्रनिष्णातबुद्धीनां गगर्यादिशब्दाच्छाब्द( बोध )रूपफलाभावेनाऽपभ्रंशे तादृशेश्वरसंकेताभावात् ।

ननु शाब्दसामान्ये शक्तिज्ञानस्य हेतुतयाऽपभाषिते शक्त्यभावे कथं शाब्दबोध इति चेन्न । शक्तिभ्रमात् । भ्रमप्रमासाधारणशक्तिज्ञानत्वेन हेतुत्वात् ।

ननु 'चैत्र'शब्दादयमर्थो बोद्धव्य इत्यास्माकीनेच्छाविषयाणां 'चैत्रा'दिशब्दानामीश्वरसंकेताभावेनाऽशक्तत्वापत्तिः । 'द्वादशाहकालीनपित्रुच्चरितनामत्वादिना

( अमुक ) नामवाच्यः' इत्याकारकेच्छया ईश्वरेण तादृशश्रुतिप्रणयनात् तत्राऽपीश्वरसंकेतोऽस्तीति बोध्यम् ।

ईश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमिति विनिगमनाविरहादतिरिक्तैव शक्तिरिति नव्याः ।

अन्यतरपक्षपातिनी युक्तिर्विनिगमना ।

मिश्रास्तु तादृशेच्छया भगवदुच्चरितत्वं शक्तिः । अपभ्रंशादयस्तु न तादृशेच्छयेश्वरोच्चारिता इति न तेषु शक्तिरित्याहुः । तन्न । वेदस्थलाक्षणिकेषु "यजमानः प्रस्तर" इत्यादिषु शक्त्यापत्तेः ।

[ साधुत्वम् ]

तादृशेश्वरसंकेतितत्वं च साधुत्वम् । केचित्तु वृत्तिमत्त्वं साधुत्वमित्याहुः ।

[ अपभ्रंशेऽपि शक्तिसाधनम् ]

अत्रेदं वक्तव्यम् । सन्मात्रविषयिण्या ईश्वरेच्छाया अपभ्रंशेऽपि सत्त्वेन तत्राऽपि शक्तिरिष्टैव । यत्तु "शास्त्रनिष्णातबुद्धीनां 'गगर्या'दिशब्दाच्छाब्दरूपफलाभावेनाऽपभ्रंशे तादृशेश्वरसंकेतो नाऽस्ती"त्यूचुः । तन्न । साधुस्मरणं विनाऽपि व्युत्पन्नानां बोधानुभवात् । भवदुक्तसंस्कृतैरयमर्थो न बुद्धः, किन्तु एतदुक्तभाषयेति व्युत्पन्नानामपि व्यवहाराच्च । एतेन अपभ्रंशेभ्यः साधुस्मरणादर्थबोध इत्यपास्तम् ।

[ 'शक्तिभ्रमाद् बोध' इति पक्षखण्डनम् ]

व्युत्पन्नानां शक्तिभ्रमाद्बोध इत्यपि न । तत्तत्पदार्थघटितेश्वरेच्छायाः, घटादिपदवृत्तित्वेन गृहीतायाः, विभिन्नाऽनुपूर्वीकत्वरूपविशेषदर्शनसत्त्वेन साधारणधर्मदर्शनाभावेन च 'गगरी'पदादौ भ्रमानुपपत्तेः । यथा शुक्तित्वेन शुक्तिज्ञानाभावे चाकचक्यादिदर्शनेन च रजतभ्रमः ।

अथवाऽस्तु यथाकथंचिच्छक्तिभ्रमः । स कस्य ? व्यवहारकर्त्तुरीश्वरस्य, उत तदतिरिक्तस्य वा ? नाऽऽद्यः । भ्रमत्वानुपपत्तेः । नान्त्यः । सर्गादौ तदतिरिक्तव्यवहारकर्त्तुरभावात् । न च सकलदेशशिष्टपरिगृहीतत्वाभावान्न तत्र शक्तिरिति वाच्यम् । 'दुश्च्यवन'शब्दस्येन्द्रे शक्त्यनापत्तेः । शिष्टैस्तदप्रयोगात् । अत एव 'प्रकाश'कृद् 'दुश्च्यवना'दिशब्दान'ऽप्रयुक्त'दोषावसरे उदाजहार ।

[ 'संकेतितत्वं साधुत्वम्' इतिपक्षखण्डनम् ]

यदपि "संकेतितत्वं साधुत्व"मित्याद्युक्तम्, तदपि न । भवन्मते समासादौ प्रकृतिप्रत्ययसमुदाये च शक्त्यभावेनाऽसाधुतापत्तेः । प्रत्येकशक्तिमादाय साधुत्वे

च 'बाधते' इत्यादिवद् 'बाधती'त्यस्यापि साधुतापत्तेः । द्योतकेष्वव्याप्तेश्च । औपसंदानिकी शक्तिरेव द्योतनेति चेत् । उपसंदीयत इति उपसंदानं समभिव्याहृतं पदम्, तद्वृत्तिशक्त्युद्बोधकत्वमिति, तदसत्त्वेन निपातेषु शक्त्यभावात् । लाक्षणिकानामसाधुतापत्तेश्च । न च तेषामपि क्वचिच्छक्तिसत्त्वादस्त्येव साधुत्वमिति वाच्यम् । 'गोणी'शब्दस्य गोण्यां शक्तिसत्त्वेन गव्यपि साधुत्वापत्तेः ।

[ साधुत्वविमर्शः ]

ननु किमिदं साधुत्वम् ? यः शब्दो यत्राऽर्थे व्याकरणव्युत्पन्नः स तत्राऽर्थे साधुः । तद्व्युत्पन्नत्वग्रहश्च क्वचित् स्पष्टोपलभ्यमानव्याकरणात्, क्वचिच्छिष्टप्रयोगकोशादिभिरनुमानात् । तस्य च बाहुलकादिना संग्रहः ।

[ लाक्षणिकस्यापि साधुत्वम् ]

एवं लाक्षणिकेऽपि ।

यद्वा लक्षणास्थले प्रथमं शक्यार्थबोधस्याऽऽवश्यकतया तमर्थमादाय साधुत्वोपपत्तेः । अत एव गङ्गापदस्य तीरपरत्वेऽपि प्रथमोपस्थितान्तरङ्गार्थमादाय स्त्रीप्रत्ययादि संगच्छते ।

[ साधुत्वज्ञानस्य न शाब्दबोधे कारणत्वम् ]

एतादृशसाधुत्वज्ञानस्य न शाब्दबोधे कारणत्वम् । तदजानतामपि बोधात् । न चाऽसाधुत्वनिश्चयस्य प्रतिबन्धकत्वम् । तत्सत्त्वेऽपि संस्कृतमविदुषां प्राकृतादितोऽपि बोधात् । विदुषामपि "*अइ पिहुलं जलकुम्भ" मित्यादिभाषातो बोधस्य सर्वानुभवसिद्धत्वाच्च ।

[ साधुत्वज्ञानोपयोगः ]

न चेदृशसाधुत्वस्य कोपयोगः ? "एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति", "साधूनेव प्रयुञ्जीते" त्यादिबोधितपुण्यजनने तदुपयोगः।

[ निष्कर्षः ]

एवं च पुण्यजनकतावच्छेदकं तत्तदर्थे व्याकरणव्युत्पाद्यत्वं साधुत्वमिति फलितम् । यद्वा व्याकरणव्यङ्ग्यः शब्दनिष्ठपुण्यजनकतावच्छेदको जातिविशेषः साधुत्वम् । भाष्ये तथैवाभिधानात् ।

---

* अइपिहुलं जलकुम्भं घेत्तूण समागदह्मि सहि तुरिअम् ।
समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥
इति पूर्णं पद्यम् ।
अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥
इति संस्कृतम् ।

[ वैयाकरणमतम् ]

वैयाकरणास्तु—बोधकत्वमेव शक्तिः। तच्च बोधजनकत्वमिन्द्रियादिवत्। अत एव विवरणेऽप्युक्तम् "बोधजननसामर्थ्यमेव शब्दस्याऽर्थेन सम्बन्धः" इति। न तु 'अस्मात्पदादयमर्थो बोद्धव्य' इत्याकारिका 'इदं पदमिममर्थं बोधयत्वि'त्याकारिका वेश्वरेच्छा, ज्ञानं, कृतिर्वा; विनिगमनाविरहेण सर्वेषां तत्त्वे गौरवात्। अतिरिक्तेत्यपि न। अतिरिक्तपदार्थस्याऽऽश्रयभेदेन विषयभेदेन च भिन्नत्वेनाऽनन्तपदार्थकल्पनायां गौरवस्य स्पष्टत्वात्।

[ अत्र दोषोद्भावनं तन्निराकरणं च ]

न चैवं 'गङ्गा'पदस्य तीरबोधकत्वेन तीरेऽपि शक्त्यापत्तिः। तथा च लक्षणोच्छेदापत्तिरिति चेत्? इष्टापत्तेः। नैयायिकैर्लाघवात् सर्वानुभवसिद्धाऽपि व्यञ्जना, लक्षणयैव निर्वाहे, अतिरिक्ता न स्वीक्रियते; तथाऽस्माभिरपि तत्तच्छाब्दबुद्धित्वावच्छिन्नं प्रति बोधजनकत्वज्ञानजन्योपस्थितित्वेनैव कारणतेत्येक एव कार्यकारणभाव इति लाघवाल्लक्षणा न स्वीक्रियते। लक्षणापक्षे तु शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च कारणत्वे कार्यकारणभावद्वयम्, तथा पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुता वाच्येतिगौरवम्।

अथ वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुता, वृत्तित्वज्ञानत्वेन च पदार्थोपस्थितिकारणतेति नैतत्कल्पनागौरवमिति चेत्?

वृत्तित्वं—शक्तिलक्षणान्यतरत्वम्, शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदार्थसम्बन्धत्वं वा—न कारणतावच्छेदकम्। शक्तित्वमपेक्ष्य गौरवात्।

यदि तु 'अप्रसिद्धशक्यसम्बन्धित्वेन गृहीतार्थविषयबोधजनकत्वं लक्षणाव्यवह्रियते, प्रसिद्धार्थविषयं तच्छक्तित्वेने'ति शक्तिलक्षणयोर्भेदं ब्रूषे, तर्हि लक्षणातस्तात्पर्यानुपपत्तिज्ञानाभावरूपस्य भेदकस्य व्यञ्जनायां सत्त्वेन तत्स्वीकार आवश्यकः।

[ निष्कर्षः ]

तत्सिद्धम्, शब्दनिष्ठतत्तदर्थविषयकधीजनकत्वमेव शक्तिः।

[ शक्तिग्रहोपायाः ]

ननु शब्दसामान्ये शक्तिज्ञानस्य हेतुत्वात् तज्ज्ञानं कथमिति चेत्?

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः"। इति प्राचीनगाथोक्तव्याकरणादित इति गृहाण।

तत्र मुख्यो व्यवहार एव शक्तिग्रहः। व्यवहारस्तु सर्गादौ ईश्वर एव प्रयोज्यप्रयोजकवृद्धः सन् व्यवहरति, तेन तटस्थो बाल आवापोद्वापाभ्यां, 'घटमानय पटं नये' त्येवंरूपाभ्यां घटादिपदे शक्तिं गृह्णाति। आवापः संग्रहः, उद्वापस्त्यागः।

प्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणात्।

गोसदृशो गवयपदवाच्य इत्युपमानात्।

"अप्येकदन्तहेरम्बलम्बोदरगजाननाः" इत्यत्र गणेशत्वविशिष्टे शक्तिग्रहः कोशात्।

नन्वत्र "विरूपाणामपि समानार्थाना" मित्येकशेषापत्तिः। कोशे पदानामेव पदार्थतया समानार्थत्वाभावात्।

'कोकिलः पिकपदवाच्य' इत्याप्तवाक्यात् पिकपदादेः कोकिले शक्तिग्रहः।

'यवमयश्चरुर्भवति' इत्यत्र यवशब्दो म्लेच्छप्रसिद्धिवशात् कङ्गोर्वाचकः, आर्यव्यवहाराद् दीर्घशूकविशिष्टस्य वाचकः, व्यवहारस्योभयत्राऽविशेषादिति संदेहे—

"वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानाश्च दृश्यन्ते यवाः कणिशशालिनः॥"

इति वाक्यशेषाद्दीर्घशूकविशिष्टे शक्तिनिर्णयः।

'पचति पाकं करोती' ति विवरणात्।

'सहकारतरौ मधुरं पिको रौती' त्यत्र सहकारतरुरूपप्रसिद्धपदसमभिव्याहारेण पिकपदस्य कोकिले शक्तिग्रहः।

### शक्तिग्रहविषयविचारः

ननु शाब्दबोधे शक्तिग्रहः सहकारी। तथा च घटपदस्य घटे शक्तिग्रहात् पटप्रत्ययोऽपि स्यात्। ननु तदर्थविषयकशाब्दत्वावच्छिन्नं प्रति तच्छक्तपदज्ञानेन हेतुत्वकल्पनान्नोक्तानुपपत्तिरिति चेत्। तर्हि देशान्तरस्थस्य पुंसः काश्यां गौरस्तीति वाक्याद् गोः प्रत्ययो न स्यात्। नहि तस्य काशीस्थायां ( गवि ) शक्तिग्रहोऽस्ति।

### मीमांसकमतम्

अत्र मीमांसकाः—गवादिपदानां गोत्वे शक्तिः।

"विशेष्यं नाभिधा गच्छेत् चीणशक्तिर्विशेषणे" इति न्यायात्।

व्यक्तेस्तु जातिराश्रयं विनाऽनुपपन्नेत्येवंरूपार्थापत्त्या लाभः।

एतेन "गामानये' त्यादौ गोत्वस्याऽनयनेऽन्वयानुपपत्त्या व्यक्तेराक्षेप-संभवेऽपि गौरस्तीत्यत्र गोत्वस्याऽस्तित्वेऽन्वयसंभवेनाऽनुपपत्तिज्ञानस्यैवाऽसंभवि-तया न तेन व्यक्तेर्लाभ" इति दीक्षितोक्तमपास्तम् ।

"गोपदस्य गोत्वे शक्तिः, व्यक्तौ लक्षणे" ति मण्डनमिश्राः । तदुक्तम्—

जातावस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति ।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे ॥ इति ।

अस्तित्वनास्तित्वे = उत्पादविनाशौ ।

न च युगपद्वृत्तिद्वयविरोधः । 'गङ्गायां घोषमत्स्यौ स्तः' इत्यत्र तत्स्वीकारेण तदनभ्युपगमे बाधकाभावात् । तन्न

"शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा ।"

यथा गङ्गायां घोष इत्यत्र तीरत्वेन ज्ञाते । न ह्यत्र व्यक्तिर्गोत्वादतिरिक्तरू-पेण ज्ञाता । व्यक्तित्वेन सास्नादिमत्त्वेन ज्ञाते च तेनैव शाब्दबोधापत्तिः । लक्ष्यता-वच्छेदकरूपेणैव लक्ष्यस्य भाननियमात् ।

[ कुब्जवादिमतम् ]

कुब्जवादिनस्तु—जातौ व्यक्तौ च शक्तिः । परं तु जातिविषयकत्वेनैव ज्ञाता शक्तिर्व्यक्तिविषयकशाब्दबोधे कारणम् । व्यक्तिशक्तिस्तु स्वरूपसदु (त्यु ?) पयुज्यते । नचैवं व्यक्तिशक्तिस्वीकारवैयर्थ्यमिति वाच्यम् । तत्पदाशक्यस्य भाने घटादेरपि भानप्रसंगेन व्यक्तिशक्तिस्वीकारस्याऽऽवश्यकत्वात् । तथा च गोत्वप्रकारक-गोविशेष्यक-शाब्दबोधं प्रति 'गोत्वविषयक-गोपदशक्तिमती गौ' रित्याकारकशक्तिज्ञानं हेतुरित्याहुः । तन्न । गौरवात् ।

[ नैयायिकमतम् ]

नैयायिकास्तु—जातौ व्यक्तौ वैशिष्ट्ये च शक्तिरिति संप्रदायमते । तदुक्तम्-"जात्याकृतिव्यक्तयः पदार्थ" इति । एकशक्तिसूचनाय पदार्थ इत्येकवचनम् ।

संप्रदायमते जातौ शक्तिस्वीकारे गौरवम् । कथं तर्हि जातिबोध इति चेत् ? यथैकस्य प्रवाहसम्बन्धस्य तीरत्वतीरयोरभावात्, शक्यसम्बन्धरूपाया लक्षणाया एकस्याः लक्ष्यतावच्छेदकलक्ष्ययोरसंभवितया, लक्ष्यतावच्छेदकविशिष्टे लक्षणाया अनङ्गीकारेण, 'गङ्गायां घोष' इत्यादौ स्ववृत्त्याऽनुपस्थापितस्याऽपि तीरत्वस्य शाब्दबोधे भानम्, तथा शक्यतावच्छेदके शक्त्यभावे तादृशकार्यकारणभावबलाद् गोत्वभानं भविष्यति ।

नव्यमते तु गव्येव शक्तिः, न तु गोत्वेऽपि, गौरवात् । न चैवं गोत्वप्रत्ययानापत्तिः । गोत्वविशिष्टशाब्दबोधं प्रति गोत्वधर्मितावच्छेदकशक्तिग्रहस्य हेतुत्वात् ।

[ प्राभाकरमतम् ]

प्राभाकरास्तु कार्यान्वितपदानां शक्तिरित्याहुः ।

[ अप्पयदीक्षितोक्तिविमर्शः ]

यत्तु दीक्षिताः—"पदं तावच्चतुर्विधम्—रूढं, यौगिकं, यौगिकरूढं, योगरूढं च । यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बोधः ,तद्रूढं ; यथा 'गो'पदम् । यत्रावयवार्थ एव बुध्यते तद्यौगिकम् ; यथा 'पाचका'दिपदम् । यत्र यौगिकरूढच-(ढा) र्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम्; यथो'द्भिदा'दिपदम् । यौगिकं खनित्रे, रूढं यागे । योगरूढं 'पङ्कजा'दिपद"मित्याहुः ।

अत्रेदं वक्तव्यम् । अत्र पद्यतेऽर्थोऽनेनेति श्रुत्याऽर्थबोधकप्रकृतिप्रत्ययादि पदशब्देन विवक्षितम्, उत सुप्तिङन्तमिति ?

नाऽऽद्यः । तत्राऽवयवार्थाभावेन "यत्रावयवशक्तिनैरपेक्ष्येणे"ति स्वग्रन्थविरोधात् । नान्त्यः । कृदादौ प्रकृतिप्रत्ययसमुदाये शक्त्यस्वीकारात्, पदस्फोटापत्तेश्च । तथा च भवत्सिद्धान्तहानिः ।

यदपि "रूढं 'गो'पद" मित्युक्तम् । तन्न । तत्रापि 'गच्छतीति गौ'रिति व्युत्पत्तिसम्भवेन केवलरूढत्वाभावात्, गमनकर्तृत्वविशिष्टे गोत्वे शक्तिरिति वक्तुं शक्यत्वात् । भवद्भिरपि धेनुपदे गोरूढित्वस्वीकारात् । धेनुपदे अवयवार्थः प्रतीयते, इह तु नेति; अत्र विनिगमकाभावात् । तस्मात् मणिनूपुरादिरु-( कमु )दाहार्यम् ।

एवं पाचकादि । तदेकं केवलयौगिकोदाहरणमपि न । भवद्रीत्या 'पच्' इति 'अक' इति शक्तं पदम्, न तत्रावयवार्थबोधः संभवति । नच भवद्रीत्या सुवन्तपदमेव मया ग्राह्यम् । तस्याऽपि 'सु'विशिष्टे शक्त्यभावेन दोषतादवस्थ्यात् । "शक्तं पदं चतुर्द्धे" ति चिन्तामण्यादावुक्तत्वात् ।

[ अश्वगन्धादिपदविमर्शः ]

ननु 'अश्वगन्धा' पदे ओषधिविशेषरूपार्थबोधनिरूपिता रूढिः । अश्वसम्बन्धवत्तया वाजिशालाबोधे तु योगमात्रम् । एवं 'मण्डप'पदेपि मण्ड-पान-

-कर्तृबोधे योगमात्रं, गृहविशेषबोधे रूढिरित्यादिसिद्धान्तः कथं संगच्छते ? रूढिजन्योपस्थितिर्योगार्थान्वयप्रतिबन्धिकेत्येतदर्थक"रूढिर्योगमपहरती"ति न्यायविरोधादिति चेत्। यत्रोभयत्राऽपि प्रकरणं, तदभावो वा तत्रैव न्यायस्याऽस्य प्रवृत्तेः।

यत्तु यत्रोभयोरन्वययोग्यता 'मण्डपं पश्ये' त्यादौ तत्रापि रूढेर्योगापहारितेत्यूचुर्वैयाकरणनव्याः। तन्न। तत्र योगार्थे एव प्रकरणसत्त्वेन योगार्थस्यैव प्राबल्यात्।

ननु 'पङ्कज' पदान्नियतपद्मस्योपस्थित्या समुदायरूढिस्वीकारेऽपि 'उद्भि'-त्पदेन खनित्रमिव 'पङ्कज' पदात् कुमुदमपि बुध्येत, योगसत्त्वात्; इति चेन्न। संप्रदायमते यत्र योगरूढिभ्यामेकार्थबोधस्तत्र केवलयौगिकार्थबोधे रूढेः प्रतिबन्धकत्वात्।

चिन्तामणिकारमतविमर्श·

मणिकृतस्तु "रूढ्या नियमतः स्मृतं पद्ममेव कर्तृवाचक'ड'प्रत्ययेन पङ्कजकर्तृतयाऽनुभाव्यते। बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात्।

व्यक्तिवचनानां=यत्किञ्चिद्व्यक्तितात्पर्यकाणाम्। सन्निहित=उपस्थितः प्रथम इत्यर्थः।

तथा च पद्मे तात्पर्यसत्त्वेन, पङ्कजनिकर्तृतया तदेव योगेनाऽपि प्रतीयते न कुमुदमिति रूढेर्न प्रतिबन्धकत्वं ग्राह्याभावानवगाहित्वाज्जनकज्ञानाविरोधित्वाच्च"त्याहुः।

तन्न। 'कुमुदं पङ्कज' मित्यत्र पद्मे तात्पर्याभावनिश्चयस्यैव तत्र बाधकत्वेन प्रथमोपस्थित्या च "बाधकं विने" त्यस्याप्रवृत्त्या लक्षणां विनैव कुमुदबोधापत्तेः। न चेष्टापत्तिः। "गृहीतपद्मप्रयोगस्य पद्मान्वयानुपपत्तिपुरःसरैव कुमुदधी" रिति स्वसिद्धान्तो व्याहन्येत।

पङ्कजपदे न लक्षणा

न च 'पङ्कज' मित्यत्र 'ड' प्रत्ययस्य पद्मत्वविशिष्टे लक्षणैवास्ताम्, युगपद्वृत्तिद्वयस्य गङ्गायांमीनघोषावित्यत्रेव संभवात्, किं समुदायशक्त्या ? इति वाच्यम्। 'ड'प्रत्ययस्याऽप्रकृतितया तदर्थपद्मत्वविशिष्टे पङ्कजोत्तरविभक्त्यर्थस्याऽनन्वयापत्तेः। प्रत्ययानां हि प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमाद्। एकाक्षरकोषा-

वधृतशक्तिक'क''खादि'वर्णानामपि लक्षणयैवोपपत्तौ 'च'-'क'-'न'-'खा'दिशब्दानामपि समुदायशक्त्यभावापत्तेश्च ।

[ पङ्कजपदे योग एवेति मतम् ]

अन्ये तु "पङ्कजपदे योग एव । पद्मत्वविशिष्टस्मृतिस्तु संस्कारात् । तदुद्बोधकं च पङ्कजपदमेव । प्रत्ययानां प्रकृतिप्रयोज्योपस्थितिविषयान्वयित्वम्, तेन विभक्त्यर्थकर्मत्वादेः पद्मत्वविशिष्टेऽन्वयः । 'धूमोऽस्ती'त्यादौ सति तात्पर्ये धूमोपस्थाप्यवह्नौ भवत्येवैकत्वान्वयः । संस्कारान्नियतोपस्थितिकपद्मत्वविशिष्टमेवाऽऽदाय योगार्थबोधस्य व्युत्पन्नत्वान्न कुमुदसाधारणो बोध" इत्याहुः ।

[ 'स्थलपद्म'वृत्तिविमर्शः ]

एवं 'पङ्कज' पदात्स्थलपद्मबोधो लक्षणयैव । तद् विजातीयमेवेति पद्माकृतिसदृशाकृतौ स्थलपद्मत्वविशिष्टे वा लक्षणा ।

ननु—"शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इतिन्यायात् समुदायस्य पद्मत्वे लक्षणा न युक्तेति चेत् ? कर्तृवाचक'ड'प्रत्यये सा बोध्या ।

[ नानार्थस्थले शक्तिनियमनम् ]

नानार्थस्थले तु इयं शक्तिः संयोगादिभिर्नियम्यते । यथा—'सशङ्खचक्रो हरि'रित्यादौ शङ्खचक्रसंयोगाद्धरिशब्दस्य विष्णौ ।

तत्र नियमनं नाम उपस्थितयोर्द्वयोरेकतरमात्रार्थविषयकतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकशाब्दबोधजननम् । नानार्थशब्दजशाब्दबोधे तात्पर्यनिर्णयस्य हेतुत्वात् ।

इति शक्तिनिरूपणम् ।

## [ अथ लक्षणा ]

[ लक्षणालक्षणम् ]

लक्षणा तु—

शक्यादशक्योपस्थितिरित्येके ।

गङ्गापदेन शक्त्या प्रवाहोपस्थितौ तत्र चाऽन्वयानुपपत्तिप्रतिसन्धानानन्तरं गङ्गापदात् पुनःस्मृतेन प्रवाहेणैकसंबन्धिज्ञानस्माऽपरसंबन्धिस्मारकतया स्वसंबन्धि तीरमुपस्थाप्यते । तथा च सैवोपस्थितिर्लक्षणेति भावः । तन्न । वृत्तेरुपस्थितिहेतुत्वेनोपस्थितिरूपत्वाभावात् ।

अशक्ये तात्पर्यं लक्षणेत्यन्ये। गङ्गापदाशक्ये तीरे तात्पर्यं गङ्गापदात् तीरबोधो जायतामितीच्छाविषयत्वम्। तन्न। 'घटमानये'त्यादौ घट-कर्मत्वयोराधेयत्वरूपसंसर्गे तात्पर्यसत्त्वाल्लक्षणात्वं स्यात्। न चेष्टापत्तिः। "अन्वये न शक्तिर्न वा लक्षणे"तिसिद्धान्तव्याघातात्। तस्मात्

स्वशक्यसंबन्धो लक्षणा।

स्वं लाक्षणिकं पदम्, तस्य यच्छक्यम्, तत्संबन्धो लक्षणेत्यर्थः।

[ लक्षणाभेदाः ]

सा द्विधा गौणी शुद्धा च।

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम्। तदात्मकः शक्यसंबन्धो गौणी।

ते च प्रत्येकं जहत्स्वार्थाऽजहत्स्वार्थेति भेदाद् द्विविधे। तत्र जहत्स्वार्थात्वं शक्यार्थस्य केनाऽपि रूपेण लक्ष्यार्थानन्वयित्वम्। शक्यार्थस्य तदन्वयित्वमजहत्स्वार्थात्वम्।

यथा गौर्वाहीकः, अत्र वाहीके गवाभेदस्य बोधात् गोपदेन गोसदृशो लक्ष्यते। गोसादृश्यं च गोगतजाड्यमान्द्यादिकमेव। तथा च जडो मन्दश्च वाहीक इति शाब्दबोधः।

[ गौण्या अजहत्स्वार्थात्वे मतभेदः ]

गौणी अजहत्स्वार्था तु नास्त्येव। सादृश्यसंबन्धेन लक्षणायां मुख्यार्थस्य लक्ष्यार्थान्वयिनाऽनन्वयात्।

गोवाहीकोभयपरे 'गाव एते समानीयन्ता'मित्यादौ गोवाहीकसमुदायश्छत्रिन्यायेन लक्ष्यते, न तु गोसदृशत्वम्, स्वस्मिन् भेदघटितस्वसादृश्याभावादिति प्राञ्चः। नव्यास्तु यत्किञ्चिद्गोसदृशत्वेन गोवाहीकसमुदायप्रतिपिपादयिषया 'गाव एते यान्ति' इति प्रयुक्तम्, तदा गौण्यपि अजहत्स्वार्था दुर्वारेत्याहुः।

शुद्धा जहत्स्वार्था 'गङ्गायां घोष' इत्यादौ।

शुद्धाऽन्त्या यथा—'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्ती' त्यादौ दध्युपघातकत्वेन काककुक्कुरादीनाम्, एक सार्थवाहित्वेन छत्र्यच्छत्रिणां बोधात्।

नैयायिकास्तु "इन्नन्तस्य वाक्यत्वेनोऽशक्यत्वात् छत्रपदे एवैकसार्थे लक्षणा, मतुबर्थश्च संबन्धः। तथा च एकसार्थवन्तो यान्तीति वाक्यार्थबोधः।

अथवा, प्रकृतावेवैकसार्थवति लक्षणा, प्रत्ययश्च तात्पर्यग्राहकः।

यद्वा, प्रत्ययस्यैवैकसार्थवति लक्षणा, छत्रपदं तात्पर्यग्राहक''मित्याहुः ।

[ लक्षितलक्षणाविचारः ]

एवं लक्षितलक्षणाऽप्येको भेदः । 'द्विरेफः' 'कदम्बः' इत्युदाहरणम् । तत्र ( द्विरेफपदं ) 'द्वौ रेफौ यत्र'ेति बहुव्रीहित्वाद्रेफद्वयसंबन्धिन्यर्थे शक्तम् । यद्यपि योगमात्रं क्रूशादिपदेऽपि अस्ति, तथापि रूढ्या भ्रमरपदमेव बोधयति । तेन च स्वशक्यसंबन्धी भ्रमररूपोऽर्थो लक्ष्यते इति द्विरेफपदस्य भ्रमरे लक्षणा ।

न च द्विरेफपदलक्ष्यभ्रमरपदस्य शक्त्यैव निर्वाहेऽलं भ्रमरे लक्षणयेति वाच्यम् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वनियमेन भ्रमरस्य द्विरेफपदार्थत्वाभावेन तत्र विभक्त्यर्थानन्वयापत्तेः ।

न च 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणे'ति भ्रमरपदशक्यतावच्छेदकभ्रमरत्वस्य कथं लक्ष्यतावच्छेदकत्वम्, शक्त्यैव तद्बोधसंभवादिति वाच्यम् । शक्येन रूपेण लक्षणानङ्गीकारे शक्त्या च तद्बोधसंभवे लक्षणाकल्पनमफलमित्यस्यैव बीजतया, प्रकृते च शक्त्या भ्रमरत्वविशिष्टस्य बोधस्वीकारे भ्रमरस्य द्विरेफपदार्थत्वाभावेन विभक्त्यर्थानन्वयानुपपत्त्या शक्यस्यापि लक्षणयैव भानमुपेयते । तथा च लक्षितपदस्य लक्षणा लक्षितलक्षणा, सा च द्विरेफपदस्य वृत्तिरिति दिक् ।

इयमतिरिक्तेति प्राञ्चः । तन्न । शक्यसंबन्धो हि लक्षणा, न तु शक्यस्य साक्षात् संबन्धः । गौरवात् । तथा च द्विरेफपदस्य लक्षणयैवोपपत्तेर्नातिरिक्ता वृत्तिरिति दिक् ।

वस्तुतस्तु द्विरेफपदस्य भ्रमरे शक्तिरेव; सामविशेषे रथन्तरादिपदानामिव तत्रावयवार्थाभावात् । अत एव भ्रमरपर्यायेषु द्विरेफपदस्य कोशेषु पाठः । न हि लाक्षणिकानां पर्यायेषु क्वचित्पाठः कोशेषु दृश्यते * । बाधप्रतिसंधानं विनैव द्विरेफपदात् भ्रमरोपस्थितेश्च शक्तिरेवोचिता, न लक्षणा ।

नन्वेवं लक्षितलक्षणोच्छेदापत्तिरिति चेन्न । "हिरण्यपूर्वं कशिपुं प्रचक्षते" इत्यादौ लक्षितलक्षणां विनाऽनिर्वाहात् ।

[ जहदजहल्लक्षणाखण्डनम् ]

वेदान्तिनस्तु "तत्त्वमसी"त्यादौ परोक्षचैतन्यापरोक्षचैतन्यवाचकयो'स्तत्'

---

* रभसोक्तिरियम्, "कृती कुशल इत्यपि" ( अमरः ३ का०, विशेष्यनिघ्नवर्गः श्लो. ४ ) इत्यादौ निरूढलाक्षणिकानां पर्यायेषु पाठदर्शनात् ।

—संपादकः

'त्व'मनयोः सामानाधिकरण्यान्वयानुपपत्त्या चैतन्यमात्रे लक्षणा। तथा च जहदजहल्लक्षणाख्योपि भेद इत्याहुः। तन्न। जहत्स्वार्थापदेनैव संग्रहात्। न चाजहत्स्वार्थात्वसंभवेन विनिगमनाविरह इति वाच्यम्। नञः प्रतियोगितावच्छेदकावच्छिन्नाभावबोधकत्वेन तदसंभवात्।

[ पदानां स्वपरत्वे वृत्तिविचारः ]

पदानां स्वपरत्वं तु लक्षणैव; न शक्तिः, अन्यलभ्यत्वादित्याहुः। तन्न।

"ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजेसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते॥"

इति रीत्या शक्तिरेव न्याय्या। "अनन्यलभ्यो हि शब्दार्थ"इत्यत्रार्थशब्दो वृत्तिपरः, तथा च संसर्गादिना लभ्ये वृत्तिकल्पनमन्याय्यमिति तदर्थः। तथा चाऽन्यलभ्यत्वादिति हेतूपन्यासो मुधैवेति दिक्।

इति लक्षणा

## [ अथ व्यञ्जना ]

व्यञ्जनायाः शक्तिलक्षणामूलत्वात्तन्निरूपणानन्तरं प्राप्तावसरतया सा निरूप्यते।

[ व्यञ्जना-लक्षणम् ]

तल्लक्षणं तु शक्तिलणाद्यजन्यप्रतीतिजनकः शब्द(ादि)निष्ठो व्यापारो व्यञ्जनेति।

[ नैयायिकमतम् ]

अत्र नैयायिकाः—"व्यञ्जना न वृत्त्यन्तरम्। लक्षणयैव तदर्थसिद्धेः।

ननु लक्षणायां मुख्यार्थे इतरान्वयानुपपत्तिर्बीजम्। न च* "गच्छ गच्छसी"त्यादौ साऽस्तीति चेत्? किमिदं लक्षणाबीजत्वम्? लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेत्। न। 'यष्टीः प्रवेशये' त्यत्र यष्टिपदस्य यष्टिधरे लक्षणा। न च तत्र मुख्यार्थे यष्टौ प्रवेशनान्वयानुपपत्तिरिति व्यभिचारात्। अपि तु तात्पर्यानुपपत्तिरिति चेत्। तर्हि "गच्छ गच्छसी"त्यत्रापि कान्तगमनाभाव एव तात्पर्यविषयः। तदन्वयानुपपत्त्या गमनबोधकपदस्य गमनाभावे लक्षणयैवोपपत्तौ नातिरिक्तवृत्त्यन्तरकल्पनम्, गौरवात्।

न चैवं लक्षणामूलव्यञ्जनाया निरासेपि अभिधामूला साऽवश्यं वाच्या।

---

*"गच्छ गच्छसि चेत् कान्त! तत्रैव स्याज्जनिर्मम।"

इति पूर्णं वाक्यम्।

तथा हि नानार्थके 'सैन्धवमानये'त्यादौ भोजनप्रकरणे लवणस्येवाऽश्वादेरपि प्रतीत्यापत्त्या शक्त्या नानार्थविषयकशाब्दबोधे जननीये प्रकरणादि सहकारि अवश्यं वाच्यम्। तथा च प्रकरणशून्याऽश्वादिरूपार्थान्तरप्रतीतौ नाऽभिधा, सहकार्यभावात्। नापि लक्षणा, मुख्यार्थबाधाभावात्। किन्तु व्यञ्जनैवेति साऽवश्यं वाच्येति वाच्यम्।

नानार्थस्थलेऽर्थान्तरप्रतीतिः शक्त्यैव। शक्ततावच्छेदकैक्येपि शक्यतावच्छेदकनानात्वं नानार्थत्वम्। न च नानार्थविषयकशाब्दत्वावच्छिन्नं प्रति प्रकरणादीनां कारणत्वात् तदभावे कथमर्थान्तरप्रतीतिः शक्त्येति वाच्यम्, प्रकरणादीनामननुगमेन व्यभिचारान्न कारणता, किन्तु तात्पर्यग्रहस्यैव। स चेहाऽप्यस्तीति शक्त्यैव निर्वाहः। परं तु यत्रार्थे प्रकरणं तत्र प्रथमत एव तात्पर्यग्रहादादावेव तदर्थप्रतीतिः। अपरपदार्थे तु तात्पर्यग्राहकान्तराच्चात्पर्यग्रहे सति अपरपदार्थप्रतीतिरित्यलमभिधामूलव्यञ्जनास्वीकारेण।

ननु लक्षणा पदनिष्ठा, व्यञ्जना तु पदैकदेशाद्याश्रितेत्याश्रयभेदाद्भेद इति चेत्। न। पदैकदेशादयो हि अर्थविशेषे तात्पर्यग्राहकाः नतु तत्प्रतिपादकाः।

ननु लक्षणाजन्यशाब्दबोधे तात्पर्यग्रहः कारणम्, न तु व्यङ्ग्ये इति चेन्न। व्यङ्ग्ये तात्पर्यस्यानपेक्षायां 'गङ्गायां घोष' इत्यादौ शैत्यादिकमेव प्रतीयते न केशवालुकादिमत्त्वमिति नियमो न स्यात्।

ननु सहृदयानां वासनाविशेषपरिपाकाच्छैत्यपावनत्वादिकमेव प्रतीयते, न केशवालुकादिकमिति चेत्। तर्हि लक्षणास्थलेपि सा नियामिकास्तु। माऽस्तु तात्पर्यग्रहस्य कारणता।

वस्तुतस्तु 'गच्छ गच्छसी'त्यादौ अस्यास्तात्पर्यमनुमीयते। यत्र तु नानुमितिसामग्री, तत्रोत्कटकोटिसंशयरूपा संभावना विषयीक्रियते। तथा च 'मा गा' इत्यर्थे गमनाभावप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यमात्रमुन्नीयते, संभाव्यते वा। न तु शब्दात्तन्निर्णयः। येन वृत्त्यन्तरं स्वीकरणीय"मित्याहुः।

[ नैयायिकमतनिराकरणम् ]

अत्रेदं वक्तव्यम्—किं व्यञ्जनैव नास्तीति ब्रूषे ? उत तस्याः पदवृत्तित्वं नास्तीति।

नाद्यः। अनया कटाक्षेणाभिलाषो व्यञ्जित इति सर्वजनप्रसिद्धेस्तथैवानुभवाच्च। चेष्टावृत्तिव्यञ्जनाया अपलपितुमशक्यत्वात्।

नान्यः । 'गतोऽस्तमर्क'इत्यादिवाक्याद् गुरुं प्रति सन्ध्यावन्दनतात्पर्येण प्रयुक्तात्प्रतिवेशिन्यादीनामभिसरणोपक्रमादिबोधस्य वक्तृतात्पर्याभावेन लक्षणयोपपादयितुमशक्यत्वात् ।

किं च देवताप्रसादादिना रचितकाव्ये रचयितुस्तदर्थज्ञानाभावेन तदर्थे तात्पर्याभावेन च तात्पर्यग्रहासंभवेपि व्यङ्ग्यस्य चमत्कारबोधविषयताया बहुशो दृष्टत्वाच्च ।

यदप्युक्तम्—"व्यङ्ग्ये तात्पर्यस्याऽनपेक्षायां 'गङ्गायां घोष'इत्यादौ शैत्यादिकमेव प्रतीयते, न तु केशवालुकादिमत्त्वमितिनियमो न स्यादि"ति । तदत्यन्तरभसात् । "स्वायत्ते शब्दप्रयोगे किमिति अवाचकं प्रयुञ्ज्महे" इति न्यायेन 'तटे घोष' इति विहाय 'गङ्गायां घोष' इति लक्षणा(णयाऽ)मुख्यप्रयोगे बीजाकाङ्क्षायां शैत्यपावनत्वादिप्रतीतेरेव बीजत्वं, न केशवालुकादिमत्त्वप्रतीतेः । तस्या'स्तटे घोष' इति मुख्यप्रयोगादपि संभवात् । केशवालुकादिकं तटनिष्ठं, न गङ्गापदशक्यप्रवाहादिनिष्ठं, यद्गङ्गापदलक्षणया घोषे प्रतीयेत ।

यदप्युक्तम्—"वस्तुतस्त्वि"त्यादिना व्यङ्ग्यार्थोऽनुमेयः संशयविषयो वेति । तन्न । व्याप्त्यादिज्ञानाभावेपि तदर्थप्रतीतेः । संशयस्याप्रतीतेश्च ।

किंच—

"रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम् ।
रसाकुलाऽऽच्छादयते दक्षिणं नयनं हरेः ॥"

इत्यादौ हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वम्, तन्निमीलनेन सूर्यास्तमयः, तेन पद्मसंकोचः, तेन पितामहस्य स्थगनम्, तेनाऽप्रतिबद्धरतिविलसितमिति क्रमेण व्यङ्ग्यार्थप्रतीतेर्व्यञ्जनाऽवश्यं स्वीकार्या ।

नह्यत्र लक्षणा संभवति । सर्वत्रैकस्य शक्यसंबन्धस्याऽभावात् । संबन्धभेदेपि तत्स्वीकारे "लक्ष्यतावच्छेदके न लक्षणा, संबन्धभेदादि" ति भवत्सिद्धान्तो व्याहन्येत ।

किं चाऽनयाऽर्थबोधे जननीये वक्तृबोद्धव्यवाच्यादिवैशिष्टयज्ञानं प्रतिभा च सहकारि ।

प्रतिभा च नवनवोन्मेषशालिनी बुद्धिः । तदुक्तम्—

"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मते" ति ।

नवनवोन्मेषो जन्मान्तरीयतद्बीजनकत्वज्ञानजन्यसंस्कारोद्बोधः ।

ननु लक्षणायामपि वक्त्रादिवैशिष्ट्यज्ञानादेः सहकारित्वमस्तु इति चेन्न। तदभावेऽपि तात्पर्यग्रहे सति तदर्थप्रतीतेः । 'गङ्गायां घोष' इत्यादौ सर्वान् प्रति एकरूपेणैव बोधः, न तथा 'गतोऽस्तमर्क' इत्यादौ ।

तस्या अतिरिक्तत्वे प्रामाणिकव्यवहारोपि नियामकः । तथा हि—निपातानां द्योतकत्वमाकरे उक्तम् । द्योतकत्वं च समभिव्याहृतपदशक्तिव्यञ्जकत्वम् । 'इदं पदमेतस्य न वाचकं, नापि लक्षकम्, अपितु व्यञ्जनया बोधकम्' इत्यादिप्रामाणिकव्यवहाराच्च ।

एवं व्यञ्जनाया आवश्यकत्वेपि यदि दुराग्रहात्त्यज्यते तर्हि 'बोधकत्वं शक्ति' रित्याश्रित्य लक्षणापि त्यज्यताम् । नहि लक्षणास्वीकारः व्यञ्जनात्यागश्च युक्तिसह इत्यास्तां तावत् ।

ननु बोधकत्वं चेच्छक्तिस्तर्हि चेष्टाया अपि बोधकत्वाच्छक्तित्वापत्तिरिति चेन्न । चेष्टा शक्ते तिप्रामाणिकव्यवहाराभावात् । किन्तु तज्जन्यबोधे तज्ज्ञानस्य कारणत्वमात्रम् ।

तत्तद्वाचकशब्दस्मरणद्वारा चेष्टया बोध इत्यपि कश्चित् । तन्न । चेष्टया एडमूकादिव्यवहारानापत्तेः । तस्यापि जन्मान्तरीयशब्दस्मरणमित्यपि कश्चित् ।

इति व्यञ्जनानिरूपणम् ।

## [ अथ धात्वर्थनिरूपणम् ]

अथ सकलशब्दमूलभूतत्वाद्धातोस्तदर्थो निरूप्यते ।

[ गुरुमतम् ]

तत्र गुरुमतानुयायिनः—यत्नातिरिक्तः फलानुकूलो व्यापारो धात्वर्थः । यत्न आख्यातार्थः । धात्वर्थे कारकान्वयः ।

[ मिश्रमतम् ]

मंडनमिश्रमतानुयायिनस्तु—"फलमेव धात्वर्थः । व्यापारः प्रत्ययार्थः । प्रत्ययार्थव्यापारव्यधिकरणधात्वर्थाश्रयत्वमेव कर्मत्वम् । 'घटं भावयती'त्यत्र 'णिच्'प्रत्ययार्थव्यापारव्यधिकरणोत्पत्त्याश्रयत्वेन घटादेः कर्मत्वम् । अन्तर्भावित-ण्यर्थेऽपि प्रत्ययस्यैव णिजर्थे लक्षणेति न दोषः । प्रत्ययार्थव्यापाराश्रयत्वमेव कर्तृत्वम् । एवं च कालस्य स्ववाचकाख्यातार्थव्यापारान्वितत्वमपि लभ्यत इत्यपरमनुकूल" मित्याहुः ।

[ उक्तमतनिरासः ]

तन्न । 'गुरुः शिष्याभ्यां पाचयती'त्याद्यनापत्तेः । तत्र हि—प्रयोजकव्यापारो णिजर्थः, प्रयोज्यव्यापार आख्यातार्थः । एवं च संख्यायाः स्ववाचकाख्यातार्थ-व्यापारान्वयिन्येवाऽन्वया'च्छिष्याभ्या'मिति द्विवचनतृतीयानापत्तिः । 'गुरु' रित्य-त्र तृतीयापत्तिश्च ।

[ अन्यमतम् ]

अन्ये तु "धातोः केवलव्यापारे शक्तिः । फलं कर्म-प्रत्ययार्थः । लाघवादि"-त्याहुः । तन्न । कर्मणि द्वितीयाचतुर्थ्यादिविधानादनेकसुपां तिङां च फले शक्ति-कल्पनापेक्षया फलविशेषबोधे तत्तद्धातुसमभिव्याहारस्य कारणत्वपेक्षया धातोरेव फले शक्तिकल्पनाया उचितत्वात् । 'तण्डुलः पच्यते स्वयमेवे'त्यादिकर्मकर्तृप्रयोगा-नुरोधेन फलस्याऽपि धातुवाच्यत्वावश्यकत्वाच्च ।

[ वैयाकरणमतम् ]

वैयाकरणास्तु—फलानुकूलो व्यापारो धात्वर्थः । तत्र फले व्यापारे च पृथक् शक्तिः । फलांश उत्सर्गतो व्यापारो विशेषणम् । जन्यत्वं संसर्गः । क्वचित्तु विषयत्वं संसर्गः । धातुना च साध्या क्रियाऽभिधीयते । घञादिभिश्च सिद्धार्थावस्थापन्ना ।

तत्र क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं रूपं साध्यत्वम् ।

क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकं रूपं सिद्धत्वम् ।

ननु 'कृष्णं नमेच्चेत्सुखं यायात्' इत्यादावनन्वयापत्तिः । नमनक्रियाया

आकाङ्क्षाविरहादिति चेत्। न। 'चे' च्छन्दसमभिव्याहारप्रयुक्ताकाङ्क्षोत्थानात्। 'पचति भवती' त्यादौ पचतीत्य याकाङ्क्षाऽभावेपि भवतीत्यादौ कर्त्राद्यपेक्षात्वा-द्योग्यतावशादन्यतराकाङ्क्षयैवान्वयेनाऽदोषात्।

नन्वेवम् 'अस्ति'–'भवति'–'विद्यती'नां धातुत्वानापत्तिः। तेषां सत्तामात्रा-र्थत्वेन व्यापाररूपक्रियावाचकत्वाभावादिति चेन्न। तत्रापि सत्ताविषयकव्यापार-स्यैवार्थत्वात्। न चैवं 'किं करोती'ति प्रश्ने 'पचती' त्यस्येवाऽ'स्ती' त्यस्याप्युत्तरं ( रत्वं ) स्यात्। आसन्नविनाशं कञ्चिदुद्दिश्य 'किं करोती' ति प्रश्ने 'अस्ती' त्युत्त-रस्य सर्वसंमतत्वात्। कृञस्तु उत्पत्तिव्यधिकरणस्तदनुकूलो व्यापारोर्थः।

[ नैयायिकमतं तन्निरासश्च ]

नैयायिकास्तु "कृञो यत्नमात्रमर्थः। नन्वेवमकर्मतापत्तिरिति चेत्। न। यद्धातूच्चारणे कर्माकाङ्क्षा नियता स सकर्मकः। सा च समानार्थकेष्वपि धातुषु विशेषोपस्थापननिबन्धना। एवं च कृञ्-यतोर्यत्नार्थत्वाविशेषेपि कृञ एव सकर्मकत्वम्, न यतेः। यथा कर्मत्वादिपदोपस्थाप्यस्य क्रियाकाङ्क्षाभावेपि द्वितीयोपस्थाप्यस्य तत्साकाङ्क्षत्व"मित्याहुः।

तन्न। 'गच्छत्या'दीनां 'यते' रिव 'कृत्रे' त्याकाङ्क्षासत्त्वेन कर्माकाङ्क्षा-विरहेण कर्मतानापत्तेः।

किंच, कृञो यत्नमात्रार्थत्वे 'दृशे' रिव कर्मस्थभाववाचकत्वाभावात् 'पश्यति भव'इत्यत्रेव 'क्रियते घटः स्वयमेवे' त्यत्रापि 'यगा'दिकं न स्यात्।

[ सकर्मकत्वाकर्मकत्वे ]

ननु तर्हि ( के ) धातोः सकर्मकत्वाकर्मकत्वे ? स्वव्यापारव्यधिकरणफल-वाचकत्वमकर्मकत्वम्। तत्समानाधिकरणफलवाचकत्वमकर्मकत्वमिति केचित्।

वस्तुतस्तु एतच्छास्त्रीयकर्मसंज्ञकार्थानन्वय्यर्थकत्वमकर्मकत्वम् तादृ-शान्वय्यर्थकत्वं सकर्मकत्वम्। अत एव 'मास आस्यते' इत्यादौ कर्मणि लकारः।

एतेन "केवलव्यापारवाचकत्वमकर्मकत्वम्। फलव्यापारोभयवाचकत्वं सकर्म-कत्व" मिति नैयायिकोक्तमपास्तम्। किं च, केवलव्यापारवाचकस्यैवाऽकर्मकत्वे ऊर्ध्वदेशसंयोगरूपव्यापारस्योत्पूर्वकस्थाधातोरर्थस्य विद्यमानत्वे उत्थित इति भूत-क्तान्तप्रयोगानुपपत्तिः। वैयाकरणमते तु ऊर्ध्वदेशसंयोगानुकूलव्यापारस्याऽतीत-त्वादूर्ध्वदेशसंयोगसत्त्वेपि तथाप्रयोगोपपत्तिः।

केचित्तु "अकर्मकत्वं व्यापारव्यधिकरणफलवाचकत्वाभाव एव। स चास्त्यादौ

फलांशाभावादुत्तिष्ठतीत्यादौ सामानाधिकरण्यादि"त्याहुः, । तन्न । गौरवात् ।

'पते'रपि 'गम्या'दि वत् सकर्मकत्वम् । न चैवं 'वृक्षाद्भूमिं पर्णं पतती'ति स्यादिति चेत् । इष्टापत्तेः । अत एव "द्वितीयाश्रिते"ति सूत्रे 'नरकपतित' इत्युदाहृतम् ।

[ उपसर्गाणां द्योतकत्ववाचकत्वविचारः ]

'अनुभूयते सुखम्' 'साक्षात्क्रियते गुरुः' इत्यादौ निपातानां द्योतकत्वेनाऽनुभवसाक्षात्काररूपफलयोर्धात्वर्थत्वात् कर्मणि लकारः ।

यत्तु "उपसर्गाणां द्योतकत्वे 'व्यतिसे'त्यादौ कथं व्यत्ययप्रत्यय इति चेत् । लुप्तधातुस्मरणात् । धातुलोपमजानतस्तु बोधो न भवत्येवे"त्यूचुर्नैयायिकनव्याः । तन्न । राजपुरुष इत्यादौ प्रत्ययलोपमजानतोपि लक्षणया तदर्थबोधवदत्रापि धातुलोपमजानतोपि प्रत्ययमात्रस्य लक्षणयैव बोधोपपत्तेः । नहि प्रत्ययलोपे प्रकृतेस्तदर्थे लक्षणा, प्रकृतिलोपे प्रत्ययस्य नेति युक्तिमत् ।

ननु निपातानां द्योतकत्वे "मातेव हितकारिणी"मित्यत्र प्रथमानुपपत्तिः मातृशब्दस्य तत्सदृशलाक्षणिकतया द्वितीयान्तेन सामानाधिकरण्याद् द्वितीयापत्तेरिति चेत् । सत्यम् । असाधुरेवायम् । यदि समर्थनीय इत्याग्रहस्तर्हि पदसंस्कारपक्षे 'शक्यं क्षुदि'त्यत्र नपुंसकत्वमिवाऽत्रापि प्रथमोपपत्तेः ( क्षितिः ) ।

[ वाचकत्वपक्षसमर्थनम् ]

यत्तु "वाचकत्वे 'इव' शब्दार्थेऽन्वयेन द्वितीयान्तसामानाधिकरण्याभावान्न द्वितीये' त्यूचुर्वैयाकरणनव्याः । तन्न । 'चन्द्र इव मुखं' पश्येत्यादेरप्यापत्तेः ।

अथवाऽस्तु वाचकता । न चाऽनुभूयते इत्यादि प्रयोगानुपपत्तिः । स्व-स्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति स्वीकारात् ।

न च 'कीदृशः समुच्चय'इतिवत् 'कीदृशश्च' इत्यपि स्यात् । तथा घटानांसमुच्चय' इति वत् 'घटानां च' इत्यपि स्यादिति वाच्यम् । यथैव धातूपस्थाप्यभावनां प्रति कारकादियोगेऽपि भावनापदोपस्थाप्यभावनां प्रति नान्वयः, शब्दशक्तिस्वाभाव्यात्; तथैव 'च' शब्दोपस्थाप्यसमुच्चये विशेषणाद्ययोग इति सिद्धान्तात् ।

ननु 'प्रतिष्ठते' इत्यत्र गमनत्वेन रूपेण बोधो न स्यात्, 'ष्ठा' धातोर्गतिनिवृत्त्यर्थत्वे अभावस्य 'प्र'शब्दार्थत्वेपि गत्यभावो नास्तीत्येव प्रत्ययापत्तेः, न च तथा बोधानुभव इति चेन्न । "धातूनामनेकार्थत्वा'त्तिष्ठते'रेव गतिरर्थः । 'प्र'

शब्दस्तु आदिकर्मबोधकः" इति भूवादय इति सूत्रे भाष्ये एव स्पष्टत्वात् ।

न च—

"शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ।"

इत्यादौ 'उस्रसदृशैः रससदृशानि'त्यर्थो'दुस्र'रस'पदोत्तरतृतीयाद्वितीयाभ्यां न 'इवा'र्थगतकर्मत्वकरणत्वे बोधयितुं शक्ये, अप्रकृत्यर्थत्वादिति वाच्यम् । 'इव' पदोत्तरलुप्ततृतीयया द्वितीयया च तद्बोधात् ।

न च सत्त्ववाचकत्वेनाऽनव्ययत्वम् । लिङ्गानन्वयित्वरूपाऽसत्त्वस्याक्षतेः ।

एवं च 'प्रतियोगिविशिष्टः सदृश' इवार्थः । तत्र प्रतियोगिनि उस्रस्याऽभेदान्वयः । सदृशस्य च शरेषु अभेदेन । उस्रपदोत्तरतृतीया रसपदोत्तरद्वितीया च उपमानोपमेययोः समानविभक्तिकत्वनियमात् । तद्रीतं ( द्वीजं ) तु उपमानोपमेययोः क्रियायामन्वयः पार्ष्ठिकः परस्परमिति बोध्यम् ।

[ द्योतकतापक्षस्यैव ज्यायस्त्वम् ]

एवं वाचकत्वे युक्तिसंभवे सत्यपि द्योतकतापक्ष एव ज्यायान् । सर्वथा नैयायिकोक्तमुपसर्गाणां द्योतकत्वं निपातानां वाचकत्वमिति अर्द्धजरतीयं हेयमेव ।

इति धात्वर्थनिरूपणम् ।

## अथ तिङामर्थो निरूप्यते ।

तत्र कर्तृ-कर्म-विहिततिङामाश्रयोऽर्थः । आश्रयत्वं चाऽखण्डोपाधिरूपं शक्यतावच्छेदकम् । वर्त्तमानत्वादिकालस्तु धात्वर्थव्यापारं प्रति प्रकारत्वेनाऽन्वेति संख्यात्वाश्रये ।

[ नैयायिकमतं तन्निरासश्च ]

अत्र नैयायिकाः—"आख्यातस्य यत्न एव शक्यः, लाघवात्, यत्नार्थककरोतिना विवरणाच्च । पूर्वोच्चरितवाक्यस्योत्तरवाक्येनाऽर्थकथनं हि विवरणम् । तथा चाऽऽख्यातपदं यत्नत्वावच्छिन्ने शक्तम्, यत्नत्वावच्छिन्न 'करोति' धातुप्रतिपादितार्थकत्वात् । 'रथो गच्छती'त्यादावाश्रये लक्षणा । न च 'विभक्तौ लक्षणा नाऽस्ती'तिसिद्धान्तव्याकोपः, तस्याऽनुशासितविभक्त्यर्थातिरिक्तविभक्त्यर्थे न लक्षणेत्यभिप्रायकत्वात् । विभक्त्यर्थाविशेषणीभूतनामार्थ आख्यातार्थविशेष्यः, तत्रैव संख्यान्वयः ।

वर्त्तमानत्वादेःकृतावन्वय" इत्याहुः। तन्न। प्रत्ययादिशक्तिग्राहकव्याकरणमुल्लङ्घ्य स्वेच्छामात्रेण यत्किञ्चिदर्थकल्पनस्याऽनुचितत्वात्।

ननु असति बाधके व्याकरणादि शक्तिग्राहकम्। लाघवात्प्रकृते त्यज्यते। यथा 'वृणा (?) दौ' इति चेत्। न। लाघवत्वस्यैवाऽसिद्धेः। तथा हि—'कर्तृ'पदस्य क्वचित्कृतौ शक्तिः, क्वचित्कर्तरीत्यनेकशक्तिकल्पने गौरवम्। तथा चा'ऽन्यायश्चानेकार्थत्व'मिति न्यायविरोधः। न च 'कृतौ शक्तिः कर्त्तरि लक्षणे'तिवाच्यम्। अनन्तकृतिल ?(त्य)तावच्छेदकत्वे गौरवात्, शक्यतावच्छेदक इव स्पष्टत्वात्।

किं च नहि कृतिमान् कर्त्ता सूत्रकारादीनां संमतः, किं तु प्रधानीभूतव्यापाराश्रयत्वेन विवक्षितः। अन्यथा 'काष्ठानि पचन्ती'ति न स्यात्। तथा च "लाघवात्कृतौ शक्ति" रित्युक्तेर्गर्भस्रावेणैव गतत्वात्।

यदपि "यत्नार्थवाचककरोतिना विवरणादि"त्युक्तम्। तदपि न। करोतेर्यत्नार्थत्वे 'दृशे'रिव कर्मस्थभावकत्वाभावेन कर्मवद्भावो न स्यादित्युक्तत्वात्। किं च 'पचतीति पाचक' इति विवरणादपि आख्यातस्य कर्त्तरि शक्तिरवश्यं स्वीकार्या। तथा च 'रथो गच्छती'त्यादौ न लक्षणाश्रयणक्लेशोऽपीति दिक्।

यदपि "विभक्त्यर्थाविशेषणीभूतनामार्थ आख्यातार्थविशेष्य" इत्युक्तम्। तदपि न। 'देवदत्ताः पचन्ति भवति' 'त्वं पचसि भवति' इत्यादीनामसाधुतापत्तेः। 'पाचको ब्रूते' इतिवत् 'देवदत्तः पचति ब्रूते' इत्यस्य साधुतापत्तेश्च। न चेष्टापत्तिः। सूत्रभाष्यादिविरोधेन केवलतर्केणेष्टापत्तेरनुचितत्वात्।

"वर्त्तमानत्वादेः कृतावन्वय" इत्यपि न। 'जानाती'त्यादौ कृत्यभावेनाऽऽश्रये लक्षणया धात्वर्थे एवाऽन्वयस्याऽवश्यं वाच्यत्वात्।

[ मीमांसकमतं तन्निरासश्च ]

मीमांसकास्तु—"आख्यातस्य भावना वाच्या, कर्तृत्वादौ तु लक्षणे"-त्याहुः। तन्न। युगपद्वृत्तिद्वयविरोधात्।

[ भावाख्यातविचारः ]

भावाख्याते तु साधुत्वार्थमेकवचनमेव। 'उष्ट्रासिका आस्यन्ते', 'हतशायिकाः शय्यन्ते' इत्यादौ तु भाष्यकारवचनात् बहुवचनम्।

[ लडर्थः ]

तत्र वर्त्तमानत्वं लडर्थः। वर्त्तमानत्वं च प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्। भूत-भविष्यद्भिन्नकालत्वं वा।

[ लिड्लङोरर्थः ]

भूतानद्यतनपरोक्षत्वं लिडर्थः ।

( भूतानद्यतनत्वं लङर्थः ) ।

यत्तु "भूतत्वं लङुच्चारणकालिकध्वंसप्रतियोगिक्षणवत्त्वम्, अनद्यतनत्वं लङुच्चारणदिनभिन्नदिनवृत्तित्वम् ।" इत्याहुः खण्डदेवादयः । तन्न । 'यजतिस्म युधिष्ठिरः' इत्यादौ भूतानद्यतनपरोक्षादौ लङुच्चारणत्वेन लक्षणद्वयस्याऽप्यव्याप्तेः ।

[ भूतलक्षणम् ]

तस्माद्

भूतत्वं विद्यमानध्वंसप्रतियोगिसमयवत्त्वम् ।

[ अनद्यतनशब्दार्थः ]

अनद्यतनत्वम् अद्यतनभिन्नत्वम् । अ(न)द्यतनत्वं चातीतायाः पश्चार्द्धेनागामिन्याः पूर्वार्द्धेन सहितदिनत्वम् ।

[ परोक्षशब्दार्थः ]

परोक्षत्वं च प्रयोक्तृवृत्ति'साक्षात्करोमी'त्येतादृशविषयताशालिज्ञानाविषयत्वम् ।

[ लुडर्थः ]

लुडर्थस्तु भविष्यत्यनद्यतनत्वम् ।

[ भविष्यल्लक्षणम् ]

भविष्यत्त्वं विद्यमानप्रागभावप्रतियोगित्वम् ।

ननु पचति चैत्रे भाविव्यापारप्रागभावमादाय 'पक्ष्यती'ति आद्यकृतिध्वंसमादाय 'अपाक्षीदि'ति स्यादिति चेन्न । आद्यकृतिप्रागभावस्यैव भविष्यत्प्रत्ययेन चरमकृतिध्वंसस्यैवातीतप्रत्ययेनाभिधानात् ।

[ लृडर्थः ]

भविष्यत्तामात्रं लृडर्थः ।

अनद्यतनभविष्यति भविष्यत्त्वमात्रविवक्षायां लृडाद्येव । 'श्वःपक्ष्याम' इति यथा । एवमनद्यतनभूतेपि यदा भूतत्वमात्रविवक्षा तदा लुङाद्येव, 'ह्योऽपाक्षीदि'त्यादि । स्पष्टं चेदं 'लुङ्'(३।२।११०)'भविष्यति गम्यादय' (३।३।३) इति सूत्रे ( त्रयोः ) भाष्ये । अत्र भूतत्वमात्रविवक्षया लुङि पश्चात् ह्यस्तनत्वप्रतीतावपि न दोषः ।

[ लोडलिङोरर्थः ]

( लङ् ) लोड्-लिङां (ङोः)कालसामान्यं विध्यादि च अर्थः ।

विधिर्निकृष्टस्य प्रवर्त्तनम् ।

निमन्त्रणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् ।

आमन्त्रणं कामचारानुज्ञा । तत्र प्रेरकस्याऽग्रहाभावमात्रम् ।

अधीष्टः सत्कारपूर्वको व्यापारः ।

एतत्सर्वानुस्यूतं प्रवर्त्तनासामान्यं विध्यर्थः ।

[ प्रवर्त्तनालक्षणम् ]

प्रवर्त्तना च प्रवृत्त्यनुकूलो व्यापारो वक्तृनिष्ठो लिङादिघटितशब्दप्रयोगादिरूपः। प्रवर्त्तकत्वं च स्वातन्त्र्ये सति लिङाद्युच्चारयितृत्वमेव। वेदे शब्दनिष्ठ एव स व्यापारः प्रवर्त्तनारूपः । प्रवर्त्तकत्वं च प्रवर्त्तनाबोधकलिङ्घटितत्वमेव ।

प्रवर्त्तना च वर्त्तमानकालैव भासते । धात्वर्थस्तु भविष्यत्काल एव शब्दशक्तिस्वाभाव्यात् । एवं चैकाश्रयभविष्यत्पाकानुकूलक्रियाविषया वर्त्तमाना प्रवर्त्तनेति पचेदित्यादौ बोधः । एतेन प्रेरणाप्रयोज्यपाकवर्त्तमानतादशायां पचेदिति प्रयोगापत्तिरिति निरस्तम् ।

[ विधिलिङ्युत्तमपुरुषविचारः ]

विधिलिङ्युत्तमस्तु न; स्वप्रवृत्तौ स्वप्रेरणाया अकारणत्वेन तज्ज्ञानानुपयोगात् । इदमेवाभिप्रेत्योत्तमपुरुषो विधिशक्तिप्रतिबन्धक इति मीमांसकाः ।

[ नैयायिकमतं तदस्वीकारश्च ]

अत्र नैयायिकाः—"लिङादेर्बलवदनिष्टाननुबन्धित्वे, कृतिसाध्यत्वे, इष्टसाधनत्वे प्रत्येकं शक्तिः । न तु समुदिते कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे, बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वे, इष्टसाधनत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वे वेति । विनिगमनाविरहात् । 'पुष्पव'च्छब्दवच्च व्युत्पत्तिवैचित्र्याद्युगपदर्थत्रयस्यापि बोधः । विषसंपृक्तान्नभोजन-चन्द्रस्पर्श-मण्डलीकरणानि च क्रमेण व्यावर्त्यानि ।

[ प्रत्यवायपरिहारस्य फलत्वविचारः ]

ननु 'श्येनेनाभिचरन् यजेते'त्यादौ श्येनस्य हिंसात्वेन नरकरूपबलवदनिष्टानुबन्धित्वात्कथं विधित्वमिति चेत् ? न । श्येनस्य नरकसाधनहिंसासाधनत्वेपि हिंसात्वाभावात् ।

[ हिंसालक्षणविचारः ]

ननु किं हिंसात्वम् ? मरणानुकूलव्यापारकत्वं तदिति चेत् । कूपादौ विनष्टे गवि तत्कर्त्तुर्गोवधप्रसङ्गात् । नाऽपि मरणोद्देशेनाऽनुष्ठीयमानत्वे सतीति विशेषितं तत् । गङ्गामरणमुद्दिश्य कृतत्रिसन्ध्यस्तवपाठादेरपि तत्त्वापत्तेः । किंतु मरणोद्देशे-

नाऽनुष्ठीयमानत्वे सति अनदृष्टद्वारा मरणानुकूलव्यापरत्वं हिंसात्वम् । श्येनादेश्च अदृष्टद्वारा मरणानुकूलत्वेन न हिंसात्वम् ।

[ नित्यकर्मस्विष्टसाधनताविचारः ]

ननु नित्ये 'सन्ध्यामुपासीते'त्यादौ फलाभावेनेष्टसाधनताज्ञानाभावात्कथं विधित्वमितिचेत् । न । तत्रापि फलत्वश्रुतेः ।

"सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥" इति

यत्र तु फलं न श्रूयते तत्र "विश्वजिता यजेते" त्यत्रेव स्वर्गः प्रत्यवायपरिहारो वा फलं कल्प्यते ।

[ प्रत्यवायपरिहारस्य फलत्वविचारः ]

न च प्रत्यवायपरिहारस्तत्प्रागभावस्तस्य च कथं फलत्वम् ? प्रागभावस्याऽजन्यत्वादिति वाच्यम् । यत्सत्त्वे यत्सत्त्वं यदभावे यदभाव इत्येवंरूपयोगक्षेमसाधारणजन्यत्वस्य तत्रापि सत्त्वात् ।

[ नित्यत्वविचारः ]

न चैवं फलकामनाधीनकर्त्तव्यत्वे काम्यत्वं स्यान्न तु नित्यत्वमिति वाच्यम् । न हि फलकामनाधीनकर्त्तव्यत्वं नित्यत्वं ब्रूमः । किं तु यदकरणे प्रत्यवायस्तत्त्वम् । कर्म त्रिविधम्—नित्यं, काम्यं, नित्यकाम्यं चेति । नित्यं सन्ध्यावन्दनादि, काम्यं यागादि, नित्यकाम्यमेकादशीव्रतादि । वस्तुतस्तु केवलं नित्यं नास्त्येव" इत्याहुः ।

तन्न । अनेकशक्तिस्वीकारे गौरवापत्तेः ।

[ मीमांसकमतम् ]

मीमांसकास्तु—लिङादिवाच्या भावना, आख्यातवाच्यापि । तत्र लिङादिवाच्या शब्दनिष्ठत्वाच्छाब्दी । आख्यातवाच्या तु, अर्थो यागादिस्तद्विषयिणीत्यार्थी । तदुक्तम्—

"अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः" इति

आर्थी भावना च 'किम्' 'केन' 'कथ' मित्यंशत्रयवती । तथा च स्वर्गकर्मिका, यागकरणिका, प्रयाजादीतिकर्त्तव्यताका चाऽऽर्थी भावना । शाब्द्यपि तथा । तथा चोक्तम्—

"लिङोऽभिधा सैव च शब्दभावना
भाव्या च तस्याः पुरुषप्रवृत्तिः ।
संबन्धबोधः करणं तदीयं
प्ररोचना चाङ्गतयोपयुज्यते ॥"

संबन्धबोधः = लिङ्पदे शक्तिग्रहः । प्ररोचना = स्तुत्यर्थवादः ।

तत्राशुविनाशिनः (कर्मणः) कालान्तरभाविस्वर्गजनकत्वासंभवाददृष्टं कल्प्यते । तदुक्तम्—

"चिरध्वस्तं फलायाऽलं न कर्मातिशयं विना" इति ।

अतिशयं = व्यापारम् । यथानुभवेन स्मृतौ जननीयायां संस्कारो व्यापार इति ।

[ अनेकापूर्ववादः ]

तत्र दर्शपौर्णमासयागयोर्नव, सप्त, षड् वाऽपूर्वाणीति मतभेदाः । तथाहि—अमावास्यायाममावास्यया यजेत, पौर्णमास्यां पौर्णमास्या यजेतेति दर्शपौर्णमासौ विहितौ । तदुत्पत्तिविषयाश्च षट् आग्नेयादयः । अत्र च दर्शत्रिकेण कालिकापूर्वसहकृतेनैकं समुदायापूर्वं जन्यते । एवं पौर्णमासेऽपि । ताभ्यां च समुदायापूर्वमिति नवापूर्वीवादः । अन्ये तु कालिकापूर्वद्विकसहितेन दर्शत्रिकेण समुदायापूर्वं जन्यते । एवं पौर्णमासेऽपि । ताभ्यां परमापूर्वमिति सप्तापूर्वीवादः । अन्ये तु पञ्चजन्यापूर्वसहकृतश्चरमः साक्षादेव फलं जनयतीति षडपूर्वीवादः ।

[ अपूर्वसाधनम् ]

ननु अपूर्वत्वे मानाभावः, यागध्वंसस्यैव व्यापारत्वसंभवात् । न च यागध्वंसस्य नाशासंभवेन स्वर्गधाराया आपत्तिः । अपूर्वस्वीकारे तु स्वर्गं जनयित्वाऽपूर्वस्य नष्टत्वात् न दोष इति वाच्यम् । उपान्त्यफलध्वंसस्य फलप्रतिबन्धकत्वोपगमात् । न च "धर्मः क्षरति कीर्त्तनात्" इति श्रुतिरनुपपन्ना । यागस्य नष्टत्वादेवाऽनाशात् । ध्वंसस्य च ध्वंसासंभवात् । अपूर्वस्वीकारे तु कीर्त्तनेनाऽपूर्वनाशाभ्युपगमादुपपद्यत एवेति वाच्यम् । कीर्त्तनादीनां फलप्रतिबन्धकत्वोपगमात् । क्षरति = फलभाग् न भवतीत्यर्थः । इति चेन्न । कीर्त्तनादीनामाशुविनाशितया फलप्रतिबन्धकत्वासंभवात् ।

[ नैयायिकमतनिरासः ]

यत्तु "धर्मिकल्पनातो धर्मकल्पनाया लघुत्वाद्यागादेरेव स्थायित्वं न त्वपूर्व"मिति भट्टमतम्, 'यागस्य स्थायित्वेन यागस्य चिरातीतदशाया'मिदानीं न यजेयम्' इति न स्यात् । अपूर्वस्वीकारे तु तस्यानिन्द्रियतया न तत्प्रत्यक्षापत्तिः"

इत्यनेन दूषयाञ्चक्रुर्नैयायिकनव्याः । तन्न । यागस्यापि क्रियात्वेनाऽतीन्द्रियत्वात् । तदुक्तं भाष्ये-"क्रिया सर्वा परोक्षैव' इत्यादिना । प्रत्यक्षत्वादिकं तु क्रियाविशिष्ट-साधनस्यैव । तथा चाऽतीतदशायां क्रियाविशिष्टसाधनाभावात् 'न यजेयम्' इत्युपपद्यते ।

[ यागस्थायित्वविचारः ]

ननु यागस्य स्थायित्वे क्रियाविशिष्टसाधनत्वस्य वर्त्तमानत्वाद् 'यागः कृतः' इत्यादि न स्यादिति चेत् । न । सूक्ष्मरूपेण सत्त्वेऽपि स्थूलरूपेणासत्त्वात् । किं च 'न यजेयम्' इत्यादि प्रयोगोऽप्यसाधुः । विधिलिङ्युत्तमो नेति पूर्वमुपपादितत्वात् ।

[ अदृष्टाधारविचारः ]

तच्चाऽदृष्टं कर्त्तरि स्वीक्रियते । गयाश्राद्धादिस्थले तु भोक्तरि पितर्य्येव । अत एव 'शास्त्रे दर्शितं फलमनुष्ठातरीत्युत्सर्ग' इति गीयते ।

नन्वनुष्ठातरि पुत्र एव तदस्तु । न च यत्र श्राद्धं कृत्वा मुक्तः पुत्रः, तत्र पितुः स्वर्गाभावप्रसङ्ग इति वाच्यम् । स्वप्रवृत्तिफलजनकाऽदृष्टनाशेऽपि तन्नाशे मानाभावात् । न च नानापुत्रकृतगयाश्राद्धे नानादृष्टस्वीकारे गौरवम् । त्रिकोटिकुलोद्धारेच्छया कृतगङ्गास्नानादौ नानादृष्टस्वीकारगौरवस्य भोक्तरि अदृष्टस्वीकारेऽपि तुल्यत्वादिति चेन्न । स्वर्गसमानाधिकरणाऽदृष्टस्वीकारे लाघवात् । न च पुत्रेण गयाश्राद्धं कृत्वा संकीर्त्तनादि कृतम्, तत्र पितुः स्वर्गानापत्तिरिति वाच्यम् । इष्टापत्तेः । पुत्रस्य बलपुष्ट्यादिकामनया यत्र पित्रा कर्म कृतं पुत्रेण कर्मनाशास्पर्शादि कृतं तत्र फलोत्पत्तौ इष्टापत्तेरेवाङ्गीकरणीयत्वादिति दिक् ।

विस्तरस्तु अस्मत्कृताख्यातवादे द्रष्टव्यः ।

[ लङर्थः ]

लङर्थस्तु अनद्यतनभूतत्वम् ।

[ लुङर्थः ]

लुङर्थस्तु भूतत्वमात्रम् ।

[ लृङर्थः ]

लृङर्थस्तु हेतुहेतुमद्भावविशिष्टक्रियातिपत्तिः । अयं भूते भाविनि च 'दृष्टो मया भवतः पुत्रोऽन्नार्थी चङ्क्रम्यमाणः, दृष्टश्चाऽपरो द्विजो ब्राह्मणार्थी, यदि स तेन दृष्टोऽभविष्यत्तदोऽभोक्ष्यत, न तु भुक्तवान्' इत्यादौ भूतेऽपि प्रयोगदर्शनात् ।

इति तिङामर्थनिरूपणम् ।

## [ अथ सन्नाद्यर्थो निरूप्यते ]

[ सन्नर्थविचारः ]

सन्नर्थ इच्छा। तत्र धात्वर्थस्य कर्मत्वसमानकर्तृत्वतया तदुभयसंबन्धेनान्वयः। क्वचित्संभावनाऽपि। तत्रैव वर्त्तमानत्वाद्यन्वयः। एवं पठितुमिच्छति पिपठिषतीत्यत्र एकनिष्ठा पाठगोचरा वर्त्तमानेच्छेत्यर्थः।

[ नैयायिकमतं तन्निरासश्च ]

नैयायिकास्तु "कर्तृप्रत्ययस्थले सन्प्रत्ययार्थेच्छायाः धात्वर्थविशेष्यतया भानम्। कर्मप्रत्ययस्थले तु तस्या धात्वर्थविशेषणतया भानम्। अत एव 'चिकीर्ष्यते पाक' इत्यादौ पाकरूपे कृतिकर्मणि आख्यातः संगच्छते। तत्रापि वर्त्तमानत्वादेरिच्छायामन्वयः। प्रकृत्यर्थैकदेशेऽपि नीलतरो घट इत्यादिस्थले नीलरूपादौ तरबाद्यर्थातिशयान्वयादि" त्याहुः। तन्न। प्रत्ययार्थः प्रधानमिति नियमभङ्गापत्तेः। व्युत्पत्तिद्वयकल्पने गौरवाच्च।

तस्माद्धात्वर्थविशेष्यितै( कै ? )वेच्छा सन्प्रत्ययार्थः। चिकीर्ष्यते पाक इत्यादौ तु उत्पत्त्यनुकूलक्रियाविषयिणीच्छा सन्नन्तधात्वर्थः।

अन्यमते तु कृतिविषयिणीच्छा।

उभयथापि 'जिज्ञास्यते घट' इत्यादौ तन्मते इच्छाविषयज्ञानविषये घटस्य धात्वर्थकर्मत्वेन तत्राख्यातवन्मन्मतेपि पाकस्य धात्वर्थकर्मत्वेन तत्राख्यातसंभवात्; एकदेशेपि कारकान्वयस्य व्युत्पन्नत्वात्।

[ क्यजाद्यर्थविचारः ]

एवं क्यजादीनामपि इच्छैवार्थः।

[ गदाधरादिमतं तन्निरासश्च ]

यत्तु "सुबन्तोत्तरेच्छार्थविहितक्यज्काम्यजन्तस्य धातोरिच्छार्थकतया सन्प्रत्ययाविशेषेपि सन्नन्तधातुवन्न सकर्मकत्वम्। तदन्तर्गतप्रातिपदिकस्यैव कर्मबोधकत्वया इच्छायाः कर्माकाङ्क्षाविरहा" दित्याहुर्गदाधरप्रभृतयः। तन्न। क्यजन्ताकर्मतासाधकहेतोः सन्नन्तेपि सत्त्वेनाऽकर्मकतापत्तेः।

एतावान् परं विशेषः। तत्र प्रातिपदिकस्य कर्मबोधकत्वं, सन्नन्ते तु धातोरिति। किं च शिशयिषतीत्यादिसन्नन्तेप्यकर्मकत्वदर्शनेन ओदनस्य पाकीयतीत्यादिक्यजन्तेपि सकर्मकत्वदर्शनेन च अकर्मकत्वसाधकहेतोरप्रामाणिकत्वात्।

[ यङर्थः ]

यङः पौनःपुन्य-बाहुल्य-कौटिल्य-गर्हादि ( दीनि ) द्योत्यानि ।

[ णिजर्थः ]

णिजर्थः प्रेरणा । लिङर्थप्रेरणाया वक्तैव प्रेरकः, णिजर्थप्रेरणायां तद्भिन्नोपीति भेदः ।

इति सन्नाद्यर्थनिरूपणम् ।

## अथ कृदर्थनिरूपणम्

कर्त्तृ-कर्म कृतामाश्रयोऽर्थः ।

भावकृत्स्तु 'एधितव्य'मित्यादौ धात्वर्थानुवादकत्वम् ।

'पाक' इत्यादौ तु सिद्धावस्थापन्नः, शब्दशक्तिस्वाभाव्यात् ।

[ क्त्वार्थविचारः ]

एवं 'क्त्वा'र्थो भाव एव । 'अव्ययकृतो भावे' इति वचनात् । समानकर्त्तृत्वं पूर्वकालत्वं च 'क्त्वा'द्योत्यम् । "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"त्यत्र पूर्वकालिकदर्शपौर्णमासवैशिष्ट्यं सोमे विधीयते । 'मुखं व्यादाय स्वपिती'त्यत्र तु व्यादानोत्तरस्वापपूर्ववर्त्तित्वम् ।

अत्र मासवर्षादिना व्यवधानेऽपि सति तात्पर्ये क्त्वाप्रत्ययो भवत्येव ।

[ प्राभाकरमतम् ]

प्राभाकरमते समानकर्त्तृत्वमेव क्त्वावाच्यम् ।

[ मणिकृन्मतम् ]

मणिकृन्मते आनन्तर्यमेव ।

[ नव्यनैयायिकमतं तन्निरासश्च ]

नैयायिकनव्यास्तु समानकर्त्तृत्वं पूर्वकालत्वं च क्त्वावाच्यमित्याहुः । तन्न । तत्र प्रत्ययार्थविशेष्यत्वेन क्रियाप्राधान्यविरहादाभीक्ष्ण्ये द्वित्वाभावापत्तेः । गुणीभूतक्रियामादाय तत्प्रवृत्तौ तु पाचकादावतिप्रसङ्गः । भावविधायकानुशासनविरोधाच्चेति दिक् ।

इति कृदर्थनिरूपणम् ।

## अथ समासशक्तिर्निरूप्यते ।

[ समासलक्षणम् ]

तत्र समासत्वं सङ्केतविशेषसंबन्धेन समासपदवत्त्वमेव । "प्राक्कडारात्समास" इत्यधिकारपठितसंज्ञात्वं वा ।

[ परकीयलक्षणविमर्शः ]

यत्तु "समासत्वं विभक्तिशून्यपूर्वपदकनामसमुदायत्वम् । अत्र विभक्तिशून्य-पूर्वपदघटितशाब्दबोधप्रधान (योज?) कानुपूर्वीसत्वम् । तेन 'न घट' इत्यादौ नाति-व्याप्तिः । 'घटो ने'त्यानुपूर्वीज्ञानत्वेनैव शाब्दबोधे हेतुत्वात्" इत्याहुर्जयरामप्रभृतयः । तन्न । 'पर्यभूवन्' 'पचतभृज्जता' 'जहिजोडम्' इत्यादितिङन्तघटितसमासेऽव्याप्तेः, 'गवित्ययमाहे'त्यादावतिव्याप्तेश्च । किं चा'भावप्रतियोगी घट'इतिशाब्दबोधे 'न घट' इत्यानुपूर्व्या एव हेतुत्वेन तत्राप्यतिव्याप्तिदार्ढ्याच्च समासे शक्तिरिति वैयाकरणाः ।

अत एव राजपुरुषैकदेशे राज्ञि 'ताका इव नरूद्धस्ये (?)' त्यादिविशेषणान्वयः । तथा 'राज्ञः पुरुषोऽश्वश्चे'तिवद्राजपुरुषोश्वश्चेति न प्रयोगः । एकत्र विशेषणतयाऽन्वि-तस्याऽन्यत्र विशेषणतयाऽन्वयायोगात् । एवं 'राज्ञः पुरुषो भार्याश्चे'तिवदेकत्र द्वयमिति विषयताशालिबोधजनकं 'राजपुरुषो भार्याश्चे'त्यपि न ।

[ नैयायिकमतविमर्शः ]

'व्यपेक्षैव सामर्थ्य'मिति नैयायिकमते तु 'कण्ठेकालः' 'दास्याःपुत्र' इत्यलुक्समासे लक्षणाया अभावेन सुन्दरेत्यादिविशेषणान्वयोऽपि स्यात् । किं च 'नीलोत्पल'मिति व्यस्त इव समस्तेपि उद्देश्यविधेयभावेनान्वयः स्यात् । स च सर्वनये विरुद्धः ।

किं च 'पङ्कज' मित्यादावपि 'ड'प्रत्ययस्यैव पद्मत्वविशिष्टे लक्षणयैवोपपत्तौ विशिष्टशक्तिरुच्छिद्येत । न चेष्टापत्तिः । अपसिद्धान्तात् ।

[ मीमांसकमतम् ]

मीमांसकास्तु—विशिष्टार्थो लक्ष्य इत्याहुः ।

[ समासगणनाविमर्शः ]

यत्तु "तत्र समासाः षट् । कर्मधारय-द्विगु-तत्पुरुष-बहुव्रीहि-द्वन्द्वा-ऽव्ययीभाव-भेदात्" इत्यूचुर्जयरामादयः । तन्न । पूर्वकालवृत्त्यनीलो(तीतो?)त्पत्त्यनुकूलव्या-पाराश्रय इत्येतदर्थकस्य 'पूर्वं भूतो भूतपूर्व' इति समासस्याऽसंग्रहात् ।

[ अव्ययीभावः ]

तत्राऽव्ययीभावाधिकारपठितसमासत्वमव्ययीभावत्वम् ।

'उपकुंभ' मित्यत्र कुम्भपदस्य कुम्भसमीपे लक्षणोपपदं तात्पर्यग्राहकम् । कुम्भपदस्य कुम्भसंबन्धिनि, तस्य चोपाद्यर्थे लक्षणा, एकदेशे च सामीप्ये कुम्भादिसंबन्धिनस्तादात्म्येनाऽन्वय इति पदद्वयलक्षणापेक्षया कुम्भपदस्यैव कुम्भसमीपपरतोपपदं च तात्पर्यग्राहकमिति दीक्षितोक्तमपास्तम् ( ? ) ।

[ परकीयलक्षणखण्डनम् ]

यत्तु "नियमतः पूर्वपदार्थविशेष्यकबोधजनकसमासत्वमव्ययीभावत्वम् । 'अर्धपिप्पली' त्यादिवारणाय 'नियमत' इती"त्यूचुर्जयरामादयः । तन्न । 'उन्मत्तगङ्ग' मित्यादावव्याप्तेः ।

[ तत्पुरुषः ]

तत्पुरुषाधिकारपठितसमासत्वं तत्पुरुषत्वम् । तत्रापि समुदाये शक्तिः ।

[ नव्यनैयायिकमतं तन्निरासश्च ]

यत्तु नैयायिकनव्याः-"समासे न समुदायशक्तिः, 'राजपुरुष' इत्यादौ राजपदस्य राजसंबन्धिनि लक्षणयैवोपपत्तेः । अनन्यलभ्यो हि शब्दार्थ इति न्यायात् । किं च तत्पुरुषात्कर्मधारयस्य लक्षणाया अभावेन यल्लघुत्वं तन्न स्यात् । उभयत्र शक्तिसाम्यात्" इत्याद्यूचुः । तन्न । शक्त्यपेक्षया लक्षणायाः शक्तिज्ञानतात्पर्यग्रहादिसापेक्षत्वेन गुरुत्वात् । न चा-'ऽनन्ये'ति न्यायविरोधः । संसर्गादिना लभ्ये वृत्तिकल्पनमन्याय्यमिति तदर्थात् । अर्थशब्दस्य वृत्तिपरत्वेनैव व्याख्यातत्वात् ।

किं च "स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्ज्महे" इति न्यायादस्ति लक्षणायां बीजाकाङ्क्षा । यथा 'गङ्गायां घोष' इत्यादौ शैत्यपावनत्वादि बीजम्, न तथा 'राजपुरुष' इत्यादौ ।

किं च पङ्कज-मण्डपो-द्भिद-श्वकर्मा(श्वगन्धा)-रथन्तरेत्यादिसमासेषु शक्तिस्वीकारस्य सर्वतन्त्रसिद्धत्वात् ।

तत्राप्यवयवलक्षणयैव निर्वाहे घटादावपि प्रकृतेः प्रत्ययस्य वा लक्षणयैवोपपत्तौ विशिष्टशक्तिरुच्छिद्येत ।

किं च शक्तिलक्षणाव्यवहारः प्रसिद्ध्यप्रसिद्धिमूलकः—यथा'गङ्गा'पदस्य प्रवाहे

प्रसिद्धत्वात्तत्र शक्तिः, 'तटे' च लक्षणा। तथा 'राजसंबन्धी पुरुष' इत्यर्थे 'राजपुरुष' इत्यस्याऽप्यस्ति प्रसिद्धिः।

'निषादस्थपत्या'दिशब्दानां कर्मधारय-तत्पुरुष-बहुव्रीहिसमासभेदेन भिन्नार्थकानां "तात्पर्याद्विशेषावगतिः" इति न्यायात् क्व तात्पर्यमिति सन्देहे "संभवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्व"मिति न्यायात्कर्मधारयलाभः।

वस्तुतस्तु "तत्पुरुषात्कर्मधारयो लघीयानि"ति न्यायो निर्मूलः। 'सुरपति'-रित्यादौ 'सुराणां पति'रिति तात्पर्ये तत्पुरुषस्यैव प्रवृत्तेः।

'निषादस्थपतिं याजये'दित्यत्र तु 'लिङ्गदर्शना'दितिसूत्रे कूटं हि निषादानामेवोपकारकमिति लिङ्गोपन्यासात्तात्पर्यनिर्णयः।

ननु 'स्थपति'शब्दः 'स्वामि'पर्यायः 'श्रेष्ठ'पर्यायो वा। उभयथापि गुणवचनत्वाज्जातिगुणयोगे गुणस्यैव पूर्वनिपातनियमात्कर्मधारये प्रयोगानुपपत्तिरिति चेन्न। तस्य राजदन्तादित्वात्।

किंच 'वषट्कर्त्तुः प्रथमभक्षः' इत्यत्र भक्षानुवादेन प्राथम्यविधानापत्तिमाशङ्क्य 'प्रथमभक्ष' इति समस्तमेकपदम्। तत्र चैकप्रसरत्वादेवैकभक्षगमुद्दिश्य प्राथम्यविधानं प्रयुक्तमिति भक्षान्तरविधिः। तथा 'त्र्यङ्गैः स्विष्टकृतं यजती'त्यत्र पशौ चोदकप्राप्तः स्विष्टकृत् प्रधाने हि विधौ(?)हृदयादिभ्य एकादशभ्योपि कर्त्तव्यत्वेन प्राप्त इति त्र्यङ्गै'रिति वचनमङ्गा(?)नां दे(हे)न त्रिभिर्विधानार्थमित्याशङ्क्यैकं हीदं समस्तं पदम्, तत्सर्वमुद्देश्यं विधेयकं वा युक्तम्। उत्तरार्द्धमुद्दिश्य पूर्वार्द्धविधानेन एकप्रसरताभङ्गात् त्रित्वविशिष्टाङ्गान्तरविधिरिति बाधतत्पुरुषव्यवस्थित(?)मेकार्थीभावानभ्युपगमेऽसंगतं स्यात्।

[ जयरामादिमतखण्डनम्, ]

यत्तु "समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामपदकसमासत्वं तत्पुरुषत्वम्। 'पञ्चमूली'त्यादिवारणाय सत्यन्तम्। नीलोत्पला'दिवारणाय लुप्तेत्यादि। न चाऽनयोस्तत्पुरुषत्वमिष्टम्, मुख्यतत्पुरुषस्याभावात्। तत्पुरुषसंज्ञाविधानं तु 'अब्राह्मण' इत्यादौ नकारलोपार्थं गौणम्। 'अब्राह्मण'मित्यादिवारणाय पूर्वेतो"त्यूचुर्जयरामादयः।

तन्न। 'पञ्चराजं' 'परमराज' इति द्विगौ कर्मधारये च मुख्यतत्पुरुषत्वाभावे 'टज'भावापत्तेः, 'गौणमुख्ययो'रिति न्यायात्। "न लोपो नञः" इत्यस्य तत्पुरुषा-

नपेक्षत्वेन 'नकारलोपाद्यर्थे गौण'मित्युक्तेरनुपयोगाच्च। किंचाऽनुशासनानुशासितत्वेन संज्ञाद्वयस्यापि मुख्यत्वे संभवति स्वेच्छामात्रेण गौणत्वकल्पनस्याऽयुक्तत्वात्।

[ नञ्तत्पुरुषविचारः ]

अत्रेदं वक्तव्यम्। नञ्तत्पुरुषस्य कर्मधारयत्वं व्याकरणपरिभाषया उत स्वपरिभाषया? नाऽऽद्यः। तथा हि—"तत्पुरुषः समानाधिकरणः कर्मधारयः"इति कर्मधारयलक्षणम्। तत्र सामानाधिकरण्यं नाम प्रवृत्तिनिमित्तभेदे सति एकार्थविशेष्यकबोधजनकत्वम्। तथा चाऽभेदसंबन्धेन यत्राऽन्वयः स कर्मधारयः। 'अब्राह्मण' इत्यादिनञ्तत्पुरुषे तु नञोऽभावोऽर्थः। तथाचाऽभावप्रतियोगी ब्राह्मण इत्यर्थः। (तेन) 'राजेवासः' 'अत्वं भवसी'त्यादावुत्तरपदार्थप्राधान्यप्रयुक्तकार्यसिद्धिः। ब्राह्मणाभाव इत्यादि वा (बो)धः। उत्तरपदार्थप्राधान्यप्रयुक्तकार्यसिद्धिस्तु 'अको'रिति लिङ्गादिति बोध्यम्। न च प्रतियोगितासंबन्धेनाऽन्वये "नामार्थयो"[1]रिति न्यायविरोधः। नञो द्योतकत्वात्। वाचकत्वपक्षे तु निपातेतर(विषयत्वस्य) समासेतरविषयत्वस्य वा स्वीकारात्। असमासस्थनञस्तु क्रिययैवान्वयाद् 'घटो नास्ती'त्यादौ घटाभिन्नाश्रयकास्तित्वाभाव इति बोधः।

नान्त्यः। नैयायिकानामपि तत्र कर्मधारय इति व्यवहाराभावात्, फलाभावाच्च।

इत्थं हि नैयायिकसरणिः—नञः संसर्गाभावान्योन्याभावावर्थौ। तत्राद्यस्त्रिधा—प्रागभावः, प्रध्वंसाभावोऽत्यन्ताभावश्चेति। विनाश्यभावत्वं प्रागभावत्वम्, जन्याभावत्वं ध्वंसत्वम्, त्रैकालिकसंसर्गाभावत्वमत्यन्ताभावत्वम्। तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्। तत्राऽत्यन्ताभावान्योन्याभावौ नित्यौ। नित्यत्वं च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्। एवं च 'अघटः पट' इति नञ्तत्पुरुषे घटस्य प्रतियोगितासंबन्धेन नञर्थे, लाक्षणिकतदर्थस्याभाववतः पटेऽभेदेनैवान्वयः। तथा च घटप्रतियोगिकाभाववदभिन्नः पट इति बोधः।

ननु 'स्वर्गो ध्वस्त' इतिवत् "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इति न्यायेन 'गौर्नित्ये'त्यादौ नित्यत्वस्य गोत्वेऽन्वयापत्त्या "पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेने"ति नियमस्याऽऽवश्यकतया

[1]—'नामार्थयोरभेदातिरिक्तः संबन्धोऽव्युत्पन्न' इति न्यायः।

नञर्थाभाववदंशेऽभावे घटस्य प्रतियोगित्वसंबन्धेन कथमन्वय इति चेत्तस्य ससंबन्धिकातिरिक्तविषयत्वात् ।

ननु घटस्य प्रतियोगितासंबन्धेनाऽभावेन्वये तस्य चैकत्वाद् 'त(न-)घटौ नास्ती'ति प्रयोगापत्तिरिति चेन्न । भावना(वान?)न्वय्यभावप्रतियोगिनि संख्यान्वयनियमात् । तत्र घटत्वाच्छिन्नप्रतियोगिताकाभावविषयकशाब्दत्वावच्छिन्नं प्रति समानाधिकरणपदासमभिव्याहृतघटपदसमभिव्याहृतनञ्पदज्ञानत्वेन कारणता । तेन 'नीलो घटो नास्ती'त्यत्र न घटत्वावच्छिन्नाभावधीः ।

'चैत्रो न पचती'त्यत्र पाकानुकूलकृत्यभाववांश्चैत्र इति बोधः ।

'जातौ सत्ता नास्ती'त्यत्र जातिवृत्त्यस्तित्वाभाववती सत्तेति बोधः ।

ननु संबन्धसामान्यावच्छिन्नजातिवृत्तित्वाभावो वा समवायसंबन्धावच्छिन्नजातिवृत्तित्वाभावो वा ? । नाद्यः । जन्यमात्रस्य कालोपाधितया भूतमात्रस्य दिगुपाधितया कालिकदैशिकविशेषणतयोस्तत्रासंभवेऽविशु(पि ए?)कार्थसमवायित्वस्य संभवात् । नान्त्यः । प्रतियोग्यप्रसिद्धेः । एवं जा तेर्नसत्ताब्दतरि वती)त्यना(त्रा)पीति चेत् । सत्यम् । अयोग्यमेवेदं वाक्यमित्येके ।

अन्ये तु सत्तापदं सत्तासमवायपरम्, सप्तम्यर्थश्चानुयोगित्वम् । तथा च जात्यनुयोगिकत्वा(त्वा)भाववान् सत्तासमवाय इति बोध इत्याहुः ।

अपरे तु सत्तानिरूपितसाक्षात्संबन्धावच्छिन्नवृत्तित्वाभावः प्रतीयते इत्याहुः ।

एतेन "समासप्रयुक्तलक्षणाशून्यतुल्याधिकरणनामद्वयघटितसमासत्वं कर्मधारयत्व"मिति तल्लक्षणं कृत्वा नञ्तत्पुरुषस्यकर्मधारयत्वं वदन्तो जयरामादयो मतद्वयेऽपि तदभावादुपेक्ष्याः ।

[ द्विगुः ]

"द्विगुश्चे"ति सूत्रविहितसंज्ञात्वमेव द्विगुत्वम् ।

यत्तु "संज्ञाविपर्यान्यत्वे सति संख्यावाचकपूर्वपदकतुल्याधिकरणसमासो द्विगुः । तद्धितार्थे भिन्ने ए(विषये?) यथा पञ्चकपाल्यः(लः?) । उक्तार्थत्वान्न तद्धितप्रत्ययः । तद्विषये यथा पाञ्चनापत्तिः(पञ्चनावप्रियः?) । अत्र समासेन तद्धितार्थानभिधानात्तद्धितप्रत्यय' इत्याहुर्जयरामादयः । तन्न । 'पञ्चभिर्गोभिः क्रीतः पञ्चगु' रित्यत्रापि समासेन तद्धितार्थस्योक्तत्वान दनुन्य(त्ताद नुत्र)त्तौ 'गोरवित( गोरतद्धितलुकि?) इति टजापत्तेः । 'पञ्चकपाल' इत्यत्र 'तद्धितार्थे विषये' इत्यनेन समासे तद्धितोत्पत्तौ तस्य लु(कि)प्रयोगसिद्धौ ति बांधायां तद्भास्य (?) व्यर्थत्वं च ।

[ बहुव्रीहि ]

'बहुव्रीहि' रित्यधिकारपठितसमासत्वं बहुव्रीहित्वम् ।

स च तद्गुणातद्गुणऽभेदेन द्विधा । तत्र तद्गुणत्वं नाम विधेयान्वयिस्वघटकावयवार्थकत्वम्, यथा 'लम्बकर्णमानये'त्यादौ । विधेयानन्वयिस्वघटकावयवार्थकत्वमतद्गुणत्वम्, यथा 'चित्रगु'रित्यादौ । अत्रापि शक्तिरेव । तेनेऽपीता(?)त्करणं संगच्छते ।

यत्तु "नियमतः समासप्रयुक्तलाक्षणिकोत्तरपदकसमासो बहुव्रीहिः । 'चित्रागावोऽस्ये' ति वाक्याच्चित्राभिन्ना गौश्चैत्रादिस्वत्वाश्रय इति बोधाद्गोपदे चित्रगोवृत्तिस्वत्वप्रतियोगिनि लक्षणा । 'चित्र' पदं तात्पर्यग्राहकम् । यद्वा गोपदे गोस्वामिनि लक्षणा । एकदेशे गवि चित्राभेदान्वयः । यद्वा गोपदादिना शक्त्या गवादिः, लक्षणया स्वाम्यादिर्बोध्यते । एकपदार्थयोरपि परस्परमन्वयः । 'शोभनचित्रगु' रित्यत्र तु 'चित्र'पदस्य शोभनचित्रगोसंबन्धिपरता, शोभनपदं च तात्पर्यग्राहकम् । 'चैत्रदत्तधन' इति समासे चैत्रकर्तृकदानकर्मकधनसंबन्धीमैत्र इति बोधः । 'आरूढो वानरो य'मिति विग्रहे वृक्षवृत्त्युपरिदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानर इति बोधः । समासे तु आरोहणकर्तृवानरसंबन्धी वृक्ष इति बोधः । एषु समानाधिकरणबहुव्रीहिः" इत्याहुर्जयरामादयः । तन्न । लक्षणाश्रयणे गौरवाद्विशिष्टे शक्तिरेवोचिता ।

न च लक्षणैव लघीयसी । तत्पुरुषात्कर्मधारयो लघीयान् इति सिद्धान्तभङ्गापत्तेः । लक्षणायां हि "अनन्यलभ्यो हि शब्दार्थ" इत्येव मूलम् । तस्य लक्षणालभ्ये शक्तिकल्पनमन्याय्यमिति नार्थः, किन्तु संसर्गादिना लभ्ये वृत्तिकल्पनमन्याय्यम् । अथवा, अनन्यलभ्यस्तात्पर्यग्रहादिनिरपेक्षः, शब्दार्थः शब्दशक्यः । नानार्थस्थले तात्पर्य्यग्रहादिनाऽभिधानियमनमात्रम्, न तु शक्ये तदपेक्षा ।' 'चैत्रदत्तधन" इत्यस्य समानाधिकरणबहुव्रीहित्वं यदुक्तं तत्त्वयुक्तमेवेति दिक् ।

द्वन्द्वः

'चार्थे द्वन्द्व' इति सूत्रविहितसमासत्वं द्वन्द्वत्वम् ।

द्वन्द्वव्यवहारविषयत्वं वा ।

तत्र समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः ।

तत्र समुच्चयस्त्वनेकस्यैकधर्मावच्छिन्ने विशेष्यतासंबन्धेन प्रकारतासंबन्धेन

वान्वयः। यथा–'देवदत्तः पचति हसति च' 'ईश्वरं गुरुं च भजस्वे'त्यादौ। एकदेवदत्ताश्रयिका वर्त्तमाना पचिक्रिया हसिक्रिया च। ईश्वरकर्मिका गुरुकर्मिका च वर्त्तमाना भजनक्रियेति बोधः।

अन्यतरस्यान्यनिष्पादकयत्र(त्न)निष्पाद्यत्वरूपे आनुषङ्गिकत्वेऽन्वाचयः। यथा–'भिक्षामट गां चानये'त्यादौ। अत्रानुषङ्गिकभिक्षाटनव्याप्य (प्यं गवानयन) मिति बोधः।

परस्परनिरूपितसाहित्यवतामेकस्मिन्नन्वय इतरेतरयोगः, यथा प्लक्षन्यग्रोधौ। सहितप्लक्षन्यग्रोधकर्मकं छेदनमिति बोधः। अत्र साहित्यं विशेषणम्। साहित्यं चाखण्डोपाधिः।

परस्परसापेक्षाणां तिरोहितावयवभेदः समूहः समाहारः। अयं च विशेष्यः–यथा पाणिपादम्।

तत्राद्ययोर्न समासः, असामर्थ्यात्।

अत्रापि विशिष्टे शक्तिः। तथा च विग्रह इव समासे उक्तार्थत्वात्साहित्य-बोधक'च'शब्दाप्रयोगः। एवं पुष्पवन्ता(वा)दिपदे साहित्यमपि शक्यतावच्छेदकम्। अतः 'एकयोक्त्ये'त्यस्यैकशक्यतावच्छेदकप्रकारेणेत्यर्थः। एवं च पुष्पवन्तावित्यादि पदं चन्द्रे सूर्ये च शक्तम्, व्यासज्यवृत्त्यवच्छेदकतास्वीकारात्। एवं च न तत एकतरमात्रबोधः। नापि शक्त्यानन्त्यम्।

[ भवानन्दमतं तन्निरासश्च ]

यत्तु "भूतले घटपटौ नस्त' इत्यत्र भूतलवृत्त्यभावे घटपटयोरुभयत्वावच्छिन्नप्रतियोगितासंबन्धेनान्वय इति द्विवचनस्य प्रयोगसाधुतामात्रं 'दाराः सन्ती'तिवदि" ति भवानन्दा आहुः। तन्न। "संभवत्यर्थसाधुत्वे शब्दसाधुत्वस्यान्याय्यत्व" मिति न्यायस्य कोषादिना दृष्टान्ते बाधसंभवेपि दार्ष्टान्तिके स्वेच्छामात्रेण तदयोगात्। 'दारा नास्ती'तिवत् 'भूतले घटपटं नास्ती'त्यपि प्रयोगानापत्तेश्च।

[ प्रथमं जयरामादिमतं तन्निरासश्च ]

यत्तु "परस्परानन्वितसमस्यमाननिखिलपदार्थबोधकसमासत्वं द्वन्द्वत्वम्। 'धवखदिरा'वित्यादौ खदिरादिपदस्य धवखदिरसाहित्याश्रये लक्षणया, धवखदिरादिशक्तिभ्यां वा, परस्परानन्वितधवखदिरबोधकत्वाल्लक्षणसंगतिः। स च द्विविधः,

इतरेतरयोगसमाहारभेदात्। यत्रावयवार्थप्राधान्यं तत्रेतरेतरयोगः। प्राधान्यं विभक्त्यर्थान्वयित्वम्। अत एव द्विवचनबहुवचने तत्र। यथा धवखदिरौ। यत्र संहतिः प्रधानं तत्र समाहारः। संहतिः साहित्यम्। साहित्यस्यैकवचनमेव, तत्र नपुंसकलिङ्गता चानुशासनात्। यथा 'हस्त्यश्वं' 'पाणिपाद'मित्यादौ हस्तिनोऽश्वस्य च साहित्यमित्या(द्या)कारिका तत्रान्वयधीः। इत्थं च 'हस्त्यश्वमानये'त्यादौ। साहित्ये सामानाधिकरण्यसंबन्धेन कर्मत्वान्वय इति प्राञ्चः।

[ नव्यमतम् ]

नव्यास्तु—'हस्त्यश्वमानये'त्यादौ 'हस्त्यश्व'पदे शक्तिभ्यामेव हस्त्यश्वबोधके, न तु साहित्यबोधके लक्षणा, एकवचनन्त्वनुशासनबलात्। समाहारसंज्ञा च नदीसंज्ञावत्पारिभाषिकी। अत एव 'हस्त्यश्व'मित्यादौ विना द्वन्द्वपदे लक्षणामन्वयबोधः। यदि च 'हस्त्यश्वं' प्रमेयमित्यादौ समाहारबोधोऽनुभवसिद्धस्तदा लक्षणेत्याहुः।

यत्तु समुच्चयार्थचकारेण यत्र प्राधान्येन क्रियासंबन्धो विवक्षितो 'धवांश्छिन्धि' 'खदिरांश्छिन्धी' त्यादौ प्राधान्येन छिदाक्रियाभेदो, यत्र चाऽन्वाचयार्थचकारेण प्राधान्येन स विवक्षितो 'धवं गुणभावेन छिन्धि'सामर्थ्यं 'खदिरं' चेत्यादौ, यत्र 'सपुत्रो गच्छती'त्यादौ पुत्रस्यैकक्रियान्वयित्वेपि विशेषणत्वेनैव तदन्वयः, तत्र द्वन्द्वाभावः साहित्यलक्षणायामेव निर्वहति। तुल्यवदेकक्रियान्वयित्वस्य साहित्यस्योक्तस्वभावात्। अत एव 'चार्थे द्वन्द्व' इत्यत्र चार्थः समुच्चयान्वाचयेतरो गृह्यते। अन्वाचयः, समाहारः, इतरेतरः, समुच्चय इत्यर्थचतुष्टयस्य चार्थत्वात्। समाहारः साहित्यम्, इतरेतरः साहित्यविशिष्टम्। अत एव 'यत्कर्तव्यं तदनया सहे' त्यादावपि पत्न्याः सहत्वं न तु साहित्यम्। पत्न्याः कथंचिदनुमतिद्वारैवोपयोगेन व्यापारसाम्याभावात्। तन्न। 'चैत्रमैत्रौ स्थितिगतिमन्ता'वित्यादियथासंख्यस्थले एकक्रियान्वयित्वाभावेपि द्वन्द्वादि''त्याहुर्जयरामादयः।

[ उक्तमतनिरासः ]

तन्न 'राजपुरुष' इत्यादौ शक्तिभ्यां परस्परानन्वितराजपुरुषबोधकत्वाद् द्वन्द्वलक्षणातिव्याप्तेः। परस्परान्वय एव समासः इत्येतद्बोधक''समर्थः पदविधि'' रित्यनुशासनविरोधाच्च। अन्यथा 'धनं राज्ञः पुरुषो भार्याया' इत्यादावपि षष्ठीसमासापत्तेः।

यदपि खदिरादिपदे लक्षणेत्युक्तम्। तदपि न। विनिगमनाविरहेण धवादि-

पदेपि तत्स्वीकारात्। उभयत्र तत्स्वीकारे तु गौरवात्। न च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादव्यवहितपूर्वपदस्यैव प्रकृतित्वात् तत्रैव लक्षणेति वाच्यम्। 'बहुपटु'रित्याद्यव्याप्त्या, 'स्त्रीयती' त्यादौ स्त्रियां व(म) तुव(?)र्थान्वयानुपपत्त्या, 'अव्ययीभावे पूर्वपदस्य, द्वन्द्वे उभयोः प्रकृतित्वमिति भवत्सिद्धान्तेन चाव्यवहितपूर्वपदस्य प्रकृतित्वमिति वक्तुमशक्यत्वात्। तस्मात् प्रत्ययविधानावधित्वमेव प्रकृतित्वम्।

यदपि "नव्यास्तु" इत्यादिना 'पारिभाषिकी' त्यन्तेन नैयायिकनव्यमतमुपन्यस्तम्। तदपि न। समाहारे वृत्त्यस्वीकारे 'घटपट'मित्यादावेकवचनविधायकानुशासनाभावेनैकवचनानापत्तेः, 'समाहरणं समाहारोऽनेकस्यैकीकरणमेको धर्म इत्यन्वर्थमूलकः समाहारद्वन्द्व' इति व्यवहारोच्छेदापत्तेश्च। न च 'नदी' 'वृद्धया' दिसंज्ञावत्समाहारसंज्ञा पारिभाषिकीति वाच्यम्। दृष्टान्ते "यू स्त्र्याख्यौ" विति परिभाषासत्त्वेपि दार्ष्टान्तिके तदभावात्। किं च द्वन्द्वे साहित्यभानाङ्गीकारे 'अग्नीषोमौ' 'इन्द्राग्नी' इत्यादावेकदेवतात्वं न स्यात्।

यदपि "यत्त्वि" त्यादिना "व्यापारसाम्याभावा" दित्यन्तेनान्यग्रन्थमुपन्यस्य "चैत्रमैत्रौ स्थितिगतिमन्तावित्यादियथासंख्यस्थले एकक्रियान्वयित्वाभावेपि द्वन्द्वादि" त्यनेन दूषयाञ्चकुस्तदपि न। तादृशप्रयोगस्य साधुत्वे प्रमाणाभावात्। असाधुत्वे च—

"लोचनाधरकृताहृतरागा 'विकृताऽविकृता देहं घ्नन्ति ते वर्द्धयन्ति चे' त्यादेरसाधुत्व" मित्या "घ्नन्तौटकितौ" इति सूत्रस्थभाष्यकैयटयोरेव मानत्वात्। यदि तादृशप्रयोगोपि प्रामाणिकस्तर्हि 'भवत' इत्यध्याहारेण बोध्यः।

[द्वितीयं जयरामादिमतं तन्निरासश्च]

यत्तु "घटकलशा" वित्यादिद्वन्द्ववारणाय पदार्थतावच्छेदकभेदस्यैव द्वन्द्वनियामकत्वात् 'नीलघटयोरैक्यं' 'शिवरामयोरभेद' इत्यादौ न द्वन्द्वानुपपत्ति" रित्यूचुर्जयरामादयः। तन्न। 'वक्रदण्डश्च कुटिलदण्डश्चे' त्यादौ पदार्थतावच्छेदकभेदसत्त्वेन द्वन्द्वापत्तेः। यदि तत्र "विरूपाणा" मित्यनुशासनेन निर्वाहं ब्रूषे तर्हि तत एव 'घटकलशा' वित्यादिवारणसम्भवे पदार्थतावच्छेदकभेदस्यैव द्वन्द्वनियामकत्वे फलाभावः। प्रत्युत 'नीलघट' इति कर्मधारयानापत्तिश्च। न च 'पदार्थतावच्छेदकभेदे एव द्वन्द्व एवे' ति न नियमः, किं तु 'पदार्थतावच्छेदकभेद एव द्वन्द्व' इति न कर्मधारयानुपपत्तिरिति वाच्यम्, समुच्चयस्य वक्तुमशक्यत्वात्।

तस्मात् पदार्थभेदे द्वन्द्वः सामानाधिकरण्ये सति पादार्थतावच्छेदकभेदे कर्मधारयः। 'नीलघटयोरैक्यम्' शु,वरामयोरभेद' इत्यादौ समासकाले सामानाधिकरण्येनान्वयाविवक्षायां द्वन्द्वः, तत्त्वे तु कर्मधारय इति विवेकः।

यत्तु 'न चैवं 'घटा' वित्यादौ द्वन्द्वसंभवे तदपवादकसरूपशेषानुपपत्तिः द्वन्द्वविषये एव तदुत्पत्तेरिति वाच्यम्। 'घटा' वित्यादौ सरूपैकशेषानङ्गीकारात्। एकेनापि घटपदेन नानाघटोपस्थापनसंभावात्। सकृदुच्चरित[1] इत्यादिनियमाभावात्। अन्यथा 'पचन्ती'त्यादावप्येकशेषापत्तेः। 'गङ्गायां घोषमत्स्यौ स्त' इत्याद्यनुरोधेन युगपद्वृत्तिद्वयविरोधस्याऽप्यनङ्गीकारात्। एकेन 'हरि' पदेन सिंहत्वविष्णुत्वाभ्यां बोधसंभवात् 'हरी' इत्यादौ नैकशेषः। 'हरिहरी' इत्यादिद्वन्द्वाभावस्तु पदासारूप्यस्यापि द्वन्द्वनियामकत्वात्। वस्तुतः "सरूपाणामेकशेष एकविभक्ता" विति सूत्रमेकविभक्तौ वचनभेदे एकशेषविधायकतया सार्थकम्। न च सविभक्तिकस्य द्वन्द्वो निर्विभक्तिकस्यैवैकशेष इति। नेदं युक्तम्। द्वन्द्वविषयेऽप्रवृत्तौ द्वन्द्वापवादकत्वायोगात्। प्रातिपदिकोत्तरं विभक्तेरावश्यकत्वे निर्विभक्तिकप्रातिपदिकद्वयासंभवाच्च। अन्यथा द्वन्द्वादिसमासो निर्विभक्तिकस्यैव स्या" दित्यूचुजयरामादयः।

अत्रेदं वक्तव्यम्। 'द्वन्द्वापवाद एकशेष' इत्यत्र न्यायोऽनुशासनं वा बीजम्? नाद्यः। तादृशन्यायस्यानुपलब्धेः फलाभावाच्च। नान्त्यः। 'सरूपैकशेषाऽनङ्गीकारात्' इत्यादि वदताऽनुशासनाऽनंगीकारात्।

यदपि" पचन्ती' त्यादावप्येकशेषापत्ते" रित्युक्तम्। तदपि न। तत्रेष्टापत्तौ दोषाभावात्। अथवाख्यातभिन्ने तत्स्वीकारात्। यद्वा अत्र कस्यैकशेष आपाद्यते, प्रत्ययान्तस्य? प्रकृतेर्वा? नाद्यः। अनुशासनेन हि विभक्तौ प्रकृतिभागस्य तद्विधानात्। नान्त्यः। प्रकृत्यर्थान्वितैकत्वबोधको हि सः। न च 'पच्' धातौ तत्संभवति। क्रियायां विभक्त्यर्थसंख्यान्वयायोगात्।

यदपि "हरिहरी" इत्यादि द्वन्द्वाभावस्तु पदासारूप्यस्यापि द्वन्द्वनियामकत्वात्" इत्युक्तम्। तदपि न। जननीवाचिपरिच्छेतृवाचिनोर्मातृशब्दयोः सारूप्येपि द्वन्द्वदर्शनात्।

यदपि "न चे"त्यादिना निर्विभक्तिकैकशेषे "द्वन्द्वापवादकत्वायोगात्" इत्यादिना दूषणाभिधानम्। तदपि न। सविभक्तिकैकशेषस्वीकारेपि द्वन्द्वापवादकत्वायोगस्य तदवस्थत्वाद्। "पदासारूप्यस्य द्वन्द्वनियामकत्वादि" ति पूर्वं भवद्भि-

[1] "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति"

रेवोक्तत्वात्। 'असाहित्ये द्वन्द्व' इति नैयायिकनव्यमते 'द्वन्द्वापवादे (द. ए.) कशेष' इत्यस्य फलाभावात्। एवम्, प्रक्रियायां निर्विभक्तिकप्रातिपदिकानेकत्वे बाधकाभावेन निर्विभक्तिकप्रातिपदिकद्वयासंभवाच्चेति दूषणस्य परास्तत्वात् निर्विभक्तिकैकशेषो निर्बाधः।

यदपि 'निर्विभक्तिकप्रातिपदिकानेकत्वसंभवे द्वन्द्वसमासो निर्विभक्तिकस्यैव स्यादि'ति निरङ्कुशतर्ककुशलैरुक्तम्। तदपि न। तद्विधायकानुशासनाभावात्। किं च सविभक्तिकैकशेषे शिष्यमाणे एकवचनश्रवणप्रसंग इत्यादिदूषणानि ग्रन्थभूयस्त्वभयान्नेह तन्यन्ते।

[ वैयाकरणसिद्धान्तः ]

अत्र वैयाकरणाः—एकशेषस्य द्वन्द्वापवादकत्वात् साहित्यप्रकारकबोधस्यानुभवाच्च साहित्यविशिष्टे शक्तिः। अत एव साहित्यप्रकारकबोधे एकशेषः, तदभावे तन्त्रम्, पुनः पुनरनुसाधने आवृत्तिरिति तद्भेदव्यवहारोऽप्युपपद्यते।

तत्र तन्त्रं द्विविधम्। शब्दतन्त्रमर्थतन्त्रं च। "अर्थभेदाच्छब्दभेद" इति नये सकृत्ताल्वोष्ठपुटव्यापाराच्छब्दोच्चारणे श्रोतुर्यत्र विनिगमनाविरहाच्छब्दद्वयज्ञानं तत्राद्यम्। "अर्थभेदेपि शब्दैक्य"मिति नये सकृत्ताल्वोष्ठपुटव्यापारात् प्रकाशितैकशब्देन विनिगमकाभावादनेकार्थबोधे द्वितीयम्।

ननु द्वन्द्वैकशेषयोः सविभक्तिकनिर्विभक्तिकभेदसत्त्वात्कथमेकशेषस्य द्वन्द्वापवादकतेति चेत्। न। यद्येकशेषो न स्यात्तदा विभक्त्युत्पत्तौ द्वन्द्वः स्यात्। कृते त्वेकशेषेऽनेकाभावादप्राप्तिरेवेत्येवंरूपापवादत्वात्।

[ वैयाकरणनव्यमतं तन्निरासश्च ]

यत्तु "द्वन्द्व" इत्यस्य साधारणत्वेन समाहारद्वन्द्वविषयेऽप्येकशेषो बोध्यः। अत एव 'घटघट' मिति प्रयोगो न। अन्यथा समाहारद्वन्द्वविषये एकशेषाभावेन दुर्वारो द्वन्द्वोऽत्र स्यादि"त्यूचुर्वैयाकरणनव्याः। तन्न। द्वित्वबहुत्वविवक्षायां समाहारैकशेषे घट इति प्रयोगापत्तेः। तस्माच्छब्दशक्तिस्वाभाव्यादि(?)ष्वेवैकशेषविषयेपि साहित्यविशेष्यको बोधो नान्यत्रेत्येव सारम्। तथा च न पूर्वोक्तानुपपत्तिः।

[ केषांचिन्मतम् ]

केचित्तु साहित्यं नाम सेनावनादिवदपेक्षाबुद्धिविषयत्वम्। इतरसाहित्यबुद्धिरेव वाऽपेक्षाबुद्धिः। अपेक्षते सापेक्षं साहित्यम्, तद्विषया बुद्धिरित्यर्थात्कर्मण्यङित्याहुः।

[ एकशेषवीप्साद्विर्वचनयोर्भेदस्य विचारः ]

नन्वेकशेषवीप्साद्विर्वचनयोः को भेद इति चेत् ? द्विर्वचने प्रत्येकमेव व्यापकसंबन्धप्रतीतिः 'ब्राह्मणाय ब्राह्मणाय शतं देही'त्यादौ । एकशेषे तु 'ब्राह्मणेभ्यः शतं देही'त्यादौ प्रत्येकमेवेति न नियमः ।

तत्र वीप्साद्विर्वचने—क्वचिदुद्देश्यतावच्छेदकव्यापकत्वं विधेये प्रतीयते, यथा पूर्वोदाहृते, तत्र बुद्धिस्थब्राह्मणाभिन्नोद्देश्यकं शतकर्मकं दानमिति बोधः। क्वचिद्विधेयव्यापकत्वमुद्देश्ये । यथा 'ब्राह्मणेभ्यः शतं शतं देही'त्यादौ । क्वचित्स्फुटं प्रतीयते उभयोरपि द्वित्वम्—यथा 'ब्राह्मणाय ब्राह्मणाय शतं शतं देही'-त्यादौ । 'एकैकस्य शतं शत'मिति च । 'गजे गजे न मौक्तिक'मित्यादौ गजव्यापकत्वाभावो मौक्तिके बोध्यते । 'शशे शशे न शृङ्ग'मित्यादौ शशव्यापकत्वं शशाधिकरणशृङ्गसत्ताभावे बोध्यते ।

[ 'यत्' पद 'तत्' पदयोर्द्विरुक्तिविचारः ]

अत्रेदं बोध्यम् । यत्र 'यत्' पदे वीप्सा तत्र न 'तत्'पदे सा; वीप्सितस्यार्थस्य विशिष्टस्य तत्पदेन परामर्शसंभवात् । अत एव "कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत्" इत्य"कथितं चे"ति सूत्रे भाष्ये । न चैवं "व्यञ्जना यस्य यस्याचः कार्यमुच्यते ततमजन्त(?)" इत्य'जादे' रितिसूत्रस्थभाष्यप्रयोगासंगतिः । तत्रैकतरत्रापि द्वित्वाभावात्, किंतु भिन्नभिन्नौ यत्तच्छब्दौ भिन्नभिन्नैव रूपेण बुद्धिस्थतत्पदार्थपरामर्शकाविति । तदेतत् सप्तमे काव्यप्रकाशे स्फुटम् ।

केचित्तु स्पष्टत्वाय क्वचित्तत्पदेपि वीप्साद्विर्वचनमिच्छन्ति इति दिक् ।

## अथ स्त्रीप्रत्ययादीनामर्थो निरूप्यते

तत्र टाबादयः स्त्रीत्वस्य द्योतकाः, न तु वाचकाः ।

[ नैयायिकमतम् ]

यत्तु "न च प्रातिपदिकार्थ एव स्त्रीत्वम्, तस्य च तदर्थ एव जात्यादिमति(ति) विशेषणत्वेनान्वयः । स्त्रीप्रत्ययास्तु द्योतकाः । लिङ्गस्य च प्रातिपदिकार्थत्वमावश्यकमेव । 'नात्र ब्राह्मणः, अपि तु ब्राह्मणी'त्यादौ पुंस्त्वबोधकपदाभावेन तद्बोधानुपपत्तेः । ब्राह्मणादिपदाज्जात्यादेर्द्रव्यस्य च भानं नियतमेव । लिंगभानं तु तात्पर्ययोग्यताधीनं क्वाचित्कं ब्राह्मणीत्यादौ पुंस्त्वाद्यबोधात् इति वाच्यम् । उक्तयुक्त्या पुंस्त्वस्य प्रातिपदिकार्थत्वेप्यनन्तानां प्रातिपदिकानां स्त्रीत्वार्थत्वे गौरवात् । लाघवेनाल्पीयसां स्त्रीप्रत्ययानां तदर्थकत्वकल्पनौचित्यात् । अतएव स्त्रीत्व-

संग्रहाय 'प्रातिपदिकार्थे'त्यादिसूत्रे लिंगग्रहणं कृतम्। अन्यथा प्रातिपदिकार्थ एव तदन्तर्भावेन पृथक् तदुपादानानुपपत्तेः। क्वचित् स्त्रीप्रत्ययः स्त्रिया भार्यात्वेन (स्त्रीत्वं) विशेष्यतया बोधयति 'शूद्री'त्यादौ। भार्यात्वं संबन्धविशेषः। तत्रैव निरूपकत्वेन प्रकृत्यर्थान्वयः। स्त्रीत्वं च योनिमत्त्वम्। खट्वाटवीदेवतादिपदे च स्त्रीप्रत्यया नार्थ बोधकाः। तत्र प्रत्यये योनिमत्त्वस्त्रीत्वस्यायोग्यतयानन्वयादि'त्याहुर्गदाधरादयः।

[ नैयायिकमतनिरासः ]

तन्न। 'श्रीः' इत्यादौ स्त्रीप्रत्ययाभावेपि स्त्रीत्वस्य प्रातिपदिकमात्रादपि प्रतीतेः, तस्यापि स्त्रीत्वार्थकत्वं प्रत्ययस्य चेति विपरीतगौरवापत्तेः। किं च स्त्रीप्रत्ययादीनां स्त्रीत्वार्थकत्वे "याचः स्त्रियामञ् (५।४।१४)" इति स्त्रियामञि विहिते 'व्यावक्रोशी'त्यादौ "उक्तार्थानामप्रयोग" इति ङीप् न स्यात्।

अपि च 'अजे'त्यादौ स्त्रीत्वस्य प्रकृत्यर्थे विशेषणत्वेनान्वयो न स्यात्, प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यात्। न चेष्टापत्तिः। "टाबादयः स्त्रीत्वं विशेषणतया बोधयन्ति" इति स्वग्रन्थविरोधात्, स्त्रीत्वविशिष्टाजेत्यनुभवविरोधाच्च। लिङ्गग्रहणस्य प्रत्याख्यातत्वेन तस्य वाचकत्वसाधकोपन्यासवैयर्थ्याच्च।

यदपि "शूद्री"त्यादौ भार्यात्वेन बोध इत्युक्तम्। तदपि न। न हि तत्र भार्यात्वेनैव बोधः। अपि तु कन्यात्वेनाऽपि। पुंयोगस्योभयत्राप्यविशेषात्। यदपि "स्त्रीत्वं च योनिमत्त्व"मित्युक्तम्। तत्रेदं वक्तव्यम्। किमिदं स्त्रीत्वं "स्त्रिया" मित्यत्र विवक्षितम्? उत शास्त्रीयम्? नाद्यः 'खट्वा''ऽटवी त्यादौ योनिमत्त्वस्त्रीत्वाभावेन "स्त्रिया"मित्यधिकृत्य विहितटाबादीनामनुत्पत्तिप्रसंगात्। दारशब्दे च तादृशस्त्रीत्वसत्त्वेन तदुत्पत्तिप्रसंगाच्च। नान्त्यः। "खट्वाटवीत्याद्यनन्वयादि" त्यन्तस्वोत्तरग्रन्थविरोधात्। किं च टाबादीनामनर्थकत्वकल्पनमनुचितमेव। "संभवत्यर्थसाधुत्वे शब्दसाधुत्वस्याऽन्याय्यत्व" मिति न्यायविरोधात्।

वैयाकरणैस्तु लिङ्गप्रयुक्तकार्यविधौ शास्त्रीयमेव लिङ्गं गृह्यते।

यत्तु "तत्र लौकिकेऽसंभवे शास्त्रीय एव। तत्संभवे तु सामानाधिकरण्यसंबन्धेन शास्त्रीयविशिष्टे लौकिके, न तु केवललौकिके, नापि केवलशास्त्रीये" इत्यूचुर्वैयाकरणनव्याः। तन्न। 'मक्षिका' इत्यत्र लौकिकसंभवेन पुंमक्षिके(त्यत्र) टाप् न स्यात्।

शास्त्रीयमपि लिङ्गं लौकिकलिङ्गवच्छाब्दबोधे भासते, तथैवानुभवात्, कोशादिप्रामाण्याच्च ।

भाष्ये तु सत्त्वादीनामुपचयापचयस्थितिरूपं पुंस्त्वं, स्त्रीत्वं, नपुंसकत्वमुक्तम् ।

इति स्त्रीप्रत्ययादीनामर्थनिरूपणम् ।

## अथ तद्धितार्थो निरूप्यते

[ 'देवता'तद्धितशाब्दबोधः ]

तत्राऽऽग्नेय' मित्यादौ 'देवताविशिष्टं देयं' प्रत्ययार्थः, पृथग्वा । तत्र प्रकृत्यर्थस्याऽभेदान्वयः । तथा चाऽग्न्यभिन्नदेवतासंबन्धी'ति बोधः । अथवाग्निवृत्तिदेवतात्वनिरूपकप्रदेयमिति बोधः । प्रदेये देवतासम्बन्धेनान्वयः ।

नन्वेवं तद्धितेन, चतुर्थ्या वा, मन्त्रवर्णेन वा पुनर्देवतासंगतिस्तत्र 'दुर्बलं तु परं पर' मिति मीमांसकोक्तं दौर्बल्यं कथमिति चेत् । इत्थम् । तद्धिते श्रुत्या, चतुर्थ्यां वाक्याद्देवतासंबन्धः । तथा च श्रुतिलिङ्गवाक्येत्यादिना बलाबलत्वम् । तद्धिते एकार्थीभावस्वीकारात् श्रुतित्वम् ।

[ 'वतेः' शाब्दबोधः ]

"ब्राह्मणवदधीते" इत्यादौ ब्राह्मणप्रतियोगिकसादृश्यस्याऽध्ययनक्रियायामसंभवात्तत्कर्तृकाध्ययने लक्षणा । तथा च ब्राह्मणकर्तृकाध्ययनप्रतियोगिकसादृश्यवदध्ययनमिति बोधः ।

'रोदितीव गायती'त्यादौ न 'वति'प्रत्ययः । अप्रातिपदिकत्वात् । (किं च) सादृश्यविशेष्यकबुद्धिं प्रति नामजन्योपस्थितेर्हेतुत्वान्न तत्र सादृश्यमिवार्थः, किं तु संभावनात्मिकोत्प्रेक्षैव । तदुक्तं 'सनूसूत्रे' भाष्ये "न वै तिङन्तेनोपमानमस्ति" ।

'अरविन्दवत्सुन्दरं मुख' मित्यत्र भवतिक्रियाध्याहारः । तथा च 'सुन्दरारविन्दभवनसदृशं सुन्दरमुखभवन'मिति बोधः ।

'ब्राह्मणेन तुल्याऽस्य गौ' रित्यत्र न वतिः, उपमेयस्य क्रियात्वे तस्य प्रवृत्तेः ।

'तत्र तस्ये' ति वतिस्तु गुणादितुल्येपि । 'मथुरावत्पाटलिपुत्रेऽपि प्राकारः' मथुराप्रतियोगिकसादृश्यवत्पाटलिपुत्रके प्राकार इति बोधः । अत्र मथुरादिपदं लाक्षणिकम् । अस्मादेव ज्ञापकात् प्रथमार्थे सप्तमी । एवं षष्ठ्यपि । अथवा 'मथुराया'मित्यत्र प्राकाराध्याहारो बोध्यः । तथा च प्राकारनिरूपिताधिकरणत्वे सप्तमी ।

'विधिवत् पूज्यते (हरिः)' इत्यत्र विधिकर्मकयोग्यताकर्तृ हरिकर्मकं देवदत्तव्यापारजन्यं पूजनमिति बोधः ।

[ मयटः शाब्दबोध ]

'आनन्दमय' इत्यत्र प्रचुरानन्दः, अथवा प्रचुरानन्दवानिति बोधः । "तत्प्रकृतवचने मयट" इत्यत्र भावेऽधिकरणे वा ल्युट् ।

नन्वानन्दमयशब्देन ब्रह्मोच्यते। तस्य निर्धर्मकत्वादानन्दरूपत्वेन तदधिकरणत्वाभावाच्च कथं 'मयडि'ति चेन्न । निर्धर्मकस्यापि व्यावहारिकप्राचुर्यपदार्थ(व)त्वात् 'राहोःशिर' इत्यत्र षष्ठ्या इवैकत्वेपि आधाराधेयभावो बोध्यः । अत एव "विकारशब्दान्नेति चेत्प्राचुर्य्यादि"ति व्याससूत्रम् । अथवा "तदि" ति योगविभागात् स्वार्थे मयट् ।

इति तद्धितार्थनिरूपणम् ।

## अथ स्फोटविचारः

अथ वाचकतायाः स्फोटैकनिष्ठत्वाचे निरूप्यन्ते—

वर्णस्फोटः १ पदस्फोटः २ वाक्यस्फोटः ३ अखण्डपदस्फोटः ४ अखण्डवाक्यस्फोटः ५ इत्थं पञ्च व्यक्तिस्फोटाः । वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोटः । इत्थमष्टौ स्फोटाः । सिद्धान्ते वाक्यजातिस्फोटः स्थितः ।

स्फुटत्यर्थो यस्मादिति स्फोटः । वाचक इति यावत् ।

तत्र प्रकृतिप्रत्यययोः पृथगर्थोपस्थापकत्वे वर्णस्फोटः । अयं तु नैयायिकानामपि संमतः ।

यत्र तु 'वस्नसा'दौ प्रकृतिप्रत्ययाज्ञानं तत्र पदस्फोटः ।

एवं 'हरेऽवे' त्यादौ (यत्र) पदयोर्विभागेनाऽज्ञानं तत्र वाक्यस्फोटः ।

एव 'मेकं पदमे(कं)वाक्य'मित्यबाधितप्रतीत्या वर्णातिरिक्तं वर्णव्यङ्ग्यं पदं वाक्यं वाऽवश्यं स्वीकार्यम् । तदेव वाचकमित्यखण्डपदवाक्यस्फोटौ ।

[ नैयायिकमतम् ]

यत्त्वत्र नैयायिकाः—"पदघटकीभूततावद्वर्णव्यङ्ग्यः ? तावतां मध्ये यत्किञ्चिद्वर्णव्यङ्ग्यो वा स्फोटः ? नाद्यः । तृतीयक्षणवृत्तिध्वंसप्रतियोगिनां तदधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकानां वर्णानामेकक्षणावस्थायिरूपमेलनासंभवात् । नान्त्यः । वर्णानां नार्थप्रत्यये उपयोगित्वम्, किं तु स्फोटप्रत्यय एव तस्य यत्कि-

श्चिदेकवर्णेनैवोपपत्तेर्वर्णान्तरोपादानस्य वैयर्थ्यात्। अथ पूर्वपूर्ववर्णगोचरसंस्कारसहितश्चरमवर्णोपलंभस्तद्व्यञ्जक इति चेत्तर्हि स एवार्थप्रत्यायकोऽस्तु, कृतं स्फोटेन। अथ नार्थप्रत्ययनानुपपत्त्या तत्सिद्धिः, किं तु पदप्रतीतिबलादिति चेन्न। आनुपूर्वीविशेषविशिष्टतावद्वर्णरूपस्यैव पदत्वात्। आनुपूर्वीविशेषश्च 'घो'त्तराव्यवहित'ट'त्वम्। अव्यवहितोत्तरत्वं च तद्व्यक्तिध्वंसाधिकरणध्वंसानधिकरणत्वे सति तद्व्यक्त्यधिकरणध्वंसानधिकरणीभूतो यः क्षणस्तदुत्पत्तिकत्वम्। यद्यप्येतस्य तत्तद्व्यक्तिघटितत्वादननुगमस्तथापि स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्व'घ'वत्'ट'त्वं बोध्यम् तेन 'घचटे'त्यतो न घटार्थप्रत्ययः, न वा 'नदी' 'दीन' 'सरो' 'रस' 'जरा' 'राजे' त्यादीनामविशेषापत्ति''रित्याहुः।

[ शब्दनित्यत्वसाधनम् ]

तन्न। 'सोय'मित्यबाधितप्रतीत्या, 'शब्दो नित्यः, व्योमैकगुणत्वात्, तत्परिमाणवत्' इत्यनुमानेन च, वर्णानां नित्यत्वे सिद्धे 'उत्पन्नो गकारः, विनष्टो गकार' इत्यनित्यत्वसाधकप्रतीत्योर्भ्रमत्वकल्पनात्।

न च लाघवात् प्रतीतिद्वयभ्रमकल्पनापेक्षया 'सोय'मित्येकप्रतीतेरेव भ्रमत्वं कल्प्यम् इति वाच्यम्। अनन्तप्रागभावतद्ध्वंसकल्पने विपरीतगौरवापत्तेः। ''तस्मादात्मन आकाशः संभूत'' इत्यादिश्रुत्याकाशस्यापि उत्पत्तिप्रलयश्रुत्याकाशस्याप्यनित्यत्वप्रसंगः।

न च ''संभूत'' इत्यस्याविर्भूत इत्यर्थः। वर्णेष्वपि तथा वक्तुं शक्यत्वात्। तथा चोत्पन्नो नष्ट इति प्रतीत्या वर्णेष्वनित्यत्वमाकाशे नेति न युक्तिमत्। अत एव भाष्यकार-प्राभाकर-भाट्टानां वर्णेषु नित्यत्वव्यवहारः। एवं च 'मेलनासंभवा'दिति पूर्वोक्तं दूषणमपास्तम्।

[ स्फोटसाधनम् ]

नन्वस्तु वर्णानां नित्यत्वं तथापि फलाभावात्तदतिरिक्तः स्फोटो न स्वीक्रियते इति चेन्न। 'तदेवेदं घटपदम्' 'तदेवेदं वाक्यम्' 'एकं पदम्' 'एकं वाक्यम्' इत्यबाधितप्रतीत्या तत्सिद्धिः। अन्यथा घटपटादीनामप्यवयवातिरिक्तावयव्यसिद्धिप्रसंगः। न चेष्टापत्तिः। भवत्सिद्धान्तभङ्गापत्तेः।

इत्थं निरूपिताः पञ्च व्यक्तिस्फोटाः।

[ बोपदेवमतम् ]

बोपदेवेन तु शक्ततावच्छेदिका जातिरेव वाचिकेत्युक्तम्। जातिश्चाविघकौ धर्मविशेषः। तथा च वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोट इति तन्मते स्फोटत्रयम्।

इति श्रीमन्मौनितिलकायमानगोवर्द्धनभट्टात्मजरघुनाथभट्टसुतश्रीकृष्णभट्ट-विरचिता वृत्तिदीपिका समाप्तिमगमत्।



परिशिष्टम्

# लक्षणा

( निबन्धा—पं० पुरुषोत्तमशर्मा चतुर्वेदः )

## उपक्रमः

अथेह दुरूहत्वाच्छब्दवृत्तित्रितयेऽत्र लक्षणा विविच्यते। तत्र सौकर्येण तत्स्वरूप-परिचयायेत्थमुपक्रमः—

## काऽसौ लक्षणा ?

पदप्रयोगो हि यद्यपि व्याकरणादिशक्तिग्राहकप्रमाणप्रमापिते शक्य—मुख्य—वाच्या—ऽभिधेयाद्याभिधानैः प्रथिते प्रधान एवाऽर्थे प्रायेण समुपलभ्यते, तथापि क्वचिद-तथाविधोऽपि स समायाति तद्विषयताम्। तथाहि स्वकीयस्नुषासमनुष्ठितपरिचर्यया परितुष्टा स्थविरश्वश्रूस्तामभिदधाति—"भद्रे! भवत्याः करकङ्कणानि (चूडियां) चिरं विराजन्ताम्" इति, उपाध्यायो मुहुर्मुहुर्बोधितमप्यर्थमनधिगच्छन्तमन्तेवासिनमभिदधाति—"उन्मत्तो भवान्" इति; स्वामी कतिपयपलसंपाद्ये कर्मणि घटिकामात्रं विलम्बमानं भृत्यममर्षाविष्टोऽभिदधाति 'प्रहरद्वयं व्यतिगमितम्" इति। एषु वाक्येषु 'करकङ्कण'शब्देन 'सौभाग्यम्', 'उन्मत्त' शब्देन 'मन्दबुद्धित्वम्, 'प्रहरद्वय' शब्देन च 'घटिकामात्रम्' वक्तुरभिलषितोऽर्थः परन्तु रूढ्या वा किञ्चित्प्रयोजनमुद्दिश्य वा तथा प्रयुज्यते। त इमेर्थाः न केनचन कोशेन प्रतिपादिताः, न च केनचिदधिगतपरमार्थेनापि विपश्चिता प्रकरणादिन परिज्ञानमन्तरेण बोधयितुं शक्याः। ततश्चेदमवगम्यते—यदेभिः पदैः सहैषामर्थानां कश्चन साक्षात्सबन्धो नास्तीति। कथमन्यथा कोशादिषु 'कङ्कणा' दीनां 'सौभाग्या' दीनां च पर्यायत्वं नोक्तं स्यात्। ततश्च कथमिमेऽर्था एषां पदानां प्रतिपाद्यतामुपयान्तीत्यवश्यविमर्शनीयतामापद्यते।

कृते च विमर्शे प्रतीयते—यच्छब्दः प्रथममभिधारूपेण स्वसम्बन्धेन वाच्यमर्थमवबोधयति, किन्तु यदाऽयमर्थो वक्तृतात्पर्यविषयतां नोपयाति—वक्तुरभिधित्सितोऽर्थस्तेन पदेन सर्वथा वा पर्याप्ततया वा न प्रतिपादयितुं शक्यते—तदा तत्पदीयवाच्यार्थसबन्धिवक्तृतात्पर्यानुकूलं किञ्चिदर्थान्तरं तत्पदेन प्रतिपादयितुमिष्टमित्यकामेनाऽप्यभ्युपेयम्।

ततश्चैतत् सिध्यति—यदेवंविधोऽर्थः पदपदार्थयोः पारस्परिकसंबन्धेन न प्रतीयते, किन्तु पदस्य यो वाच्यार्थस्तत्संबद्धत्वेन प्रतीयते।

तदेतदेवमवगमपथेऽधिरोपणीयम्—सर्वमपि पदजातं द्विविधया भङ्ग्याऽर्थं प्रतिपादयति—साक्षात्सम्बन्धद्वारा च, परम्परासम्बन्धद्वारा च । परम्परासम्बन्धश्च तत्पदीयवाच्यार्थस्यार्थान्तरेण संबन्धः । तत्र प्रथमः संबन्धोऽ'भिधा'संज्ञया द्वितीयस्तु 'लक्षणा' संज्ञयाऽभिधीयते । यत्र हि न प्रथमः प्रभवति प्रत्याययितुमभिलषितमर्थम्, तत्र भवति द्वितीयस्यावकाशः । अतएव वृत्तिष्वभिधायाः प्रथमा कक्षा, लक्षणायास्तु द्वितीया । ततश्च पदपदार्थयोः संबन्धस्या'ऽभिधे'ति संज्ञा, वाच्यार्थसंबन्धस्य तु 'लक्षणे' ति भवति निष्कर्षः । तदेतदेवोक्तम् "शक्यसंबन्धो लक्षणे"त्येवं विश्वनाथेन च जगन्नाथेन च सिद्धान्तमुक्तावल्यां च रसगङ्गाधरे च । अस्मिन् विषये 'अभिधावृत्तिमातृका'कर्तुर्मुकुलस्य पद्यमिदमवधेयम्—

"शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता ।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ॥" इति॥

अस्य तात्पर्यन्तु अर्थान्तरानन्तरितोऽर्थो मुख्यः, अर्थान्तरान्तरितस्तु लक्षणाप्रतिपाद्य इति ।

## लक्षणाप्रवृत्तेर्निमित्तानि

अथालोच्यताम्—किं वस्तु निमित्तीकृत्य लक्षणा प्रवर्त्तत इति । तत्र मुख्यार्थबाधः प्रथमं निमित्तम् । मुख्यार्थबाधश्च वक्तृतात्पर्यानुकूल्येन तत्पदीयमुख्यार्थस्य प्रकृतपदार्थेऽन्वयानुपपत्तिः । सोऽयं लक्षणाप्रवृत्तेः प्रधानं बीजम् । किन्तु केवलस्यैतस्य लक्षणाबीजत्वे वक्ता यदि कमपि शब्दं प्रयुज्य कमप्यर्थमवबोधयितुमागृह्णीयात्तर्हि न स प्रतिषेद्धुं शक्येत । तथा सति वक्तुस्तात्पर्यं कस्मिन्नर्थ इति प्रतीतिरतिदुरूहतामापद्येतेति लक्षणाप्रवृत्तेर्नियामकमन्यदपि निमित्तद्वयमन्विष्टमाचार्यैः—रूढिश्च, प्रयोजनं च । ततश्चैतद्द्वयान्यतरसत्त्वमप्यपरिहेयं लक्षणाप्रवृत्तेर्निमित्तमिति सिद्धम् ।

अत्रायमभिसन्धिः । शब्दो हि मुख्यार्थासंबद्धमर्थं तु न प्रभवत्येव कथमपि प्रत्याययितुम्, यतो मुख्यार्थसंबन्ध एव हि लक्षणा । किन्तु मुख्यार्थसंबद्धमप्यर्थमसौ लक्षणया तदैव बोधयितुं शक्नोति यदा स शब्दस्तस्मिन्नर्थे रूढिम् (पारम्परिकलोकव्यवहाररूपां प्रसिद्धिम्) उपयातः स्यात्, प्रयोजनं वा किञ्चित् प्रतिपिपादयिषितं स्यात् । तेन मुख्यार्थस्य वक्तृतात्पर्याननुकूलत्वं वा तात्पर्यबोधायापर्याप्तत्वं वेत्येकम्, रूढिर्वा प्रयोजनं वेत्यपरं चेत्युभयं संभूय लक्षणाप्रवृत्तेर्निमित्तम् । एतद्द्वयाभावे न काचन लक्षणा प्रवर्त्तत इत्यवधेयम् ।

## लक्षणालक्षणविचारः

### प्राचीनानां लक्षणानि

लक्षणाशब्दो द्विधा विगृह्यते—भावव्युत्पत्त्या च करणव्युत्पत्त्या च । तत्र भावव्यु-

त्पत्त्या 'लक्षणं' 'लक्षणे'तिरूपया लक्ष्यार्थप्रतीतिरूपायाः क्रियाया भवति लक्षणात्वम्। करणव्युत्पत्त्या तु 'लक्ष्यतेऽनये'तिरूपया तादृशप्रतीतिहेतोर्व्यापारस्य लक्षणात्वं सिध्यति। तत्र मीमांसकादिभिः प्राचीनपण्डितैः काव्यप्रकाशकृता श्रीमम्मटभट्टेन च भावव्युत्पत्तिरेवादृताऽस्य शब्दस्य। अत एव भट्टकुमारिलेन—

"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते" इति.

काव्यप्रकाशकृता च

"अन्योऽर्थो लक्ष्यते यत् सा लक्षणा"

इत्यभिहितम्। अनयोरर्थस्तु क्रमेण 'वाच्यार्थसंबद्धार्थस्य प्रतीतिर्लक्षणे' ति 'वाच्यार्थातिरिक्तार्थस्य प्रतीतिर्लक्षणे' ति च। अस्याः क्रियाया वस्तुतोऽर्थनिष्ठत्वेनार्थव्यापाररूपत्वाच्छब्दव्यापारता न संभवतीति शब्दे आरोपितत्वमस्य व्यापारस्योक्त श्रीमम्मटेन "आरोपितक्रिया" इति। तामेतां परिपाटीमनुमन्यमानानां प्राचीनानामासील्लक्षणं "शक्यसंबन्धेनाऽशक्यप्रतिपत्तिर्लक्षणा" इति। तदर्थस्तु वाच्यार्थस्य कंचन संबन्धं द्वारीकृत्य वा निमित्तीकृत्य वा वाच्यार्थातिरिक्तार्थस्य स्मृतिरिति। अत एव नव्यैर्लक्षणारूपत्वेन निर्णीतस्यापि शक्यसंबन्धस्य (मुख्यार्थसंबन्धस्य) तादृशप्रतीतिकारणत्वेन लक्षणाकारणत्वमभ्युपेत्य लक्षणाप्रवृत्तेः प्राचीनैः कारणत्रयं निर्दिष्टम्—

"मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्"

इत्यादौ। तत अतैत् सिद्धं यल्लक्षणा वस्तुतोऽर्थनिष्ठैव, शब्दे तु तस्या आरोपितत्वैचेति।

अथ लक्षणायाः शब्दे केवलमारोपिततामसहमानेनाप्पय्यदीक्षितेन तु—

"मुख्यार्थसंबन्धेन शब्दस्य प्रतिपादकत्वम्"

इति तस्या लक्षणं निर्मितम्। तदर्थस्तु मुख्यार्थसंबन्धं द्वारीकृत्य शब्दे योऽर्थान्तरप्रतिपत्ति (बोध) जनकत्वरूपो धर्मः स लक्षणेति। तदेवं दीक्षितेन लक्षणायाः शब्दे समारोपितत्वमात्रत्वं निरस्य शब्देन सह साधितस्तस्याः संबन्धः कथंचन।

## निष्कृष्टं लक्षणम्

अथास्मिन्ननन्तरोदिते लक्षणद्वये किञ्चिद् विचार्यते। तत्र

"शक्यसंबन्धेनाऽशक्यप्रतिपत्तिर्लक्षणा"

इति प्राचीनानां लक्षणे मुख्यार्थातिरिक्तार्थस्मृतेर्लक्षणात्वं स्वीकृतम्। न चैतदुचितम्, यतो लक्षणायाः शब्दवृत्तित्वं तु निर्विवादमेव, अत एव श्रीमम्मटेनाऽपि वृत्तित्रयविचा-

राय 'शब्दव्यापारविचारा'भिधानः कश्चन संदर्भो निर्ममे, स्वीकृतं च तत्र व्यापारत्वं लक्षणाया अपि। शब्दाज्जायमानायामर्थोपस्थितौ यदीयज्ञानं हेतुः स पदार्थश्च शब्दस्य वृत्तिरित्युच्यते। स पदार्थश्च न स्मृतिरूपः, किन्तु सम्बन्धरूप एव। न हि तादृशस्मृतेर्ज्ञानं लक्ष्यार्थज्ञाने कारणम्, किन्तु शब्दार्थसम्बन्धज्ञानमेव। ततश्च नवीनैर्निर्दिष्टस्य शक्य-(मुख्यार्थ) सम्बन्धस्यैव लक्षणात्वमुचितम्, न तु प्राचीनैः प्रतिपन्नायाः शक्यसम्बन्ध-मूलाया अशक्यार्थप्रतिपत्तेः।

यत्पुनरप्पय्यदीक्षितेन शब्दनिष्ठस्य प्रतिपादकत्वरूपधर्मस्य लक्षणात्वमुक्तम्, तत्राप्ये-तद् विचार्यम्। स धर्मो हि प्रतिपत्तिकारणत्वं वा प्रतिपत्त्यनुकूलव्यापारो वेत्येतदुभ-यातिरिक्तो न भवत्येव। तत्र नाद्यः। 'अयं शब्दोऽस्यार्थस्य ज्ञानकारणम्' इत्याकारकस्य प्रतिपत्तिकारणत्वज्ञानस्य लक्ष्यार्थोपस्थितौ हेतुत्वाभावात्, तत्त्वाभावे च वृत्तित्वविरहात्। द्वितीयश्चेत्तर्हि तादृशव्यापारस्य शक्यसम्बन्धानतिरिक्तत्वात् द्रविडप्राणायाममपास्य 'शक्यसम्बन्धो लक्षणे'त्येव वाच्यम्। किन्तु तथा सति 'मुख्यार्थसम्बन्धेने'ति पदस्य लक्षणवाक्ये व्यर्थता दुर्वारैवेत्यपि नास्पष्टम्।

ततश्च 'शक्यसम्बन्धो लक्षणा' इत्येव सुविमृष्टं लक्षणाया लक्षणमिति सिद्धम्।

## गौण्या अपि लक्षणात्वम्

सेयं लक्षणा शक्यसंबन्धरूपत्वात् संबन्धविधाबाहुल्यमनुसृत्य कार्यकारणभावा-दिनानाविधस्वरूपा दृग्गोचरीभवति। सादृश्यस्वरूपाऽपि च सा दृश्यते। तत्र मीमांसकैः सादृश्यस्य संबन्धरूपतामस्वीकृत्य तदतिरिक्तसंबन्धसत्त्व एव लक्षणा स्वीक्रियते, सादृश्य-सत्त्वे तु 'गौणी'तिनामिका स्वतन्त्रैव वृत्तिरिति व्यवह्रियते। किन्त्वेतन्न विचारसहम्। तथा हि वृत्तिवार्त्तिकेऽप्ययदीक्षितः—

"तत्सादृश्येन प्रतिपादकत्वरूपा गौण्यपि लक्षणाप्रभेद एव। तत्सदृशेऽपि तन्नि-रूपितसादृश्याधिकरणत्व(रूप)परम्परासंबन्धसत्त्वात्। न हि 'साक्षात्संबन्धे विशिष्ट-बुद्धियोग्यसंबन्धे वा सत्येव लक्षणा' इति नियमः। चक्षुरादेर्घटनैल्यादिषु संयुक्तसमवाया-दिवद् विशिष्टबुद्ध्ययोग्यस्य परम्परासंबन्धस्यापि प्रत्यासत्तित्वोपपत्तेः। व्यतिरेक(विपरीत)-लक्षणास्थले 'तन्निरूपितविरोधाधिकरणत्वा'दिपरम्परासंबन्धमात्रेण तादृशेन लक्षणा-क्लृप्तेश्च। एतेन—'सादृश्यं न संबन्ध' इति गौणी लक्षणातो भिन्ना, विशिष्टधीयोग्यस्यैव संबन्धत्वात्; संयोगे सति 'दण्डी देवदत्तः' इतिवत् (सिंहदेवदत्तयोः पराक्रमादिना) सत्यपि सादृश्ये 'सिंहवान् देवदत्तः' इति विशिष्टबुद्धेरदर्शनात्—इति निरस्तम्। विशिष्टबुद्ध्य-नियामकपरम्परासंबन्धस्याऽपि प्रत्यासत्तित्वोपपत्तेस्तावता लक्षणाक्लृप्तेश्च दर्शित-

त्वात् । तस्मात् सादृश्यगर्भतदन्यसंबन्धनिमित्ततया गौणी शुद्धा चेति लक्षणायाः एव द्वैविध्यम्" इति ।

## लक्षणाया नामान्तराणि

भक्तिः, उपचारः, अमुख्या वृत्तिः—इत्यादीन्यस्या एव नामान्तराणि । काव्यप्रकाशकारादयस्तु उपचारशब्दं केवलगौणीवाचकमेव मन्यते ।

## लक्षणाया भेदाः

लक्षणाप्रवृत्तेः कारणद्वयमधस्तादुक्तम्—रूढिः, प्रयोजनं चेति । ते निमित्तीकृत्य प्रवृत्ताया लक्षणायाः प्रथमतो द्वौ भेदौ—रूढा, प्रयोजनवती च । रूढाया निरूढेति प्रयोजनवत्यास्तु फललक्षणेत्यपि नामान्तरम् ।

तत्र प्राचीनानां मते निरूढाया भेदा न सन्त्येव । मध्यवर्त्तिभिस्तु गौणी शुद्धा चेति द्वौ भेदावस्या अपि स्वीकृतौ । साहित्यदर्पणप्रवन्धुर्विश्वनाथादृते नाऽन्येन केनाप्याचार्येणेतोऽधिका भेदा अस्याः स्वीकृताः । साहित्यदर्पणकर्त्तुर्भेदेषु स्वस्माभिरुपरिष्टात् स्वातन्त्र्येण विचारयिष्यते ।

प्रयोजनवत्या अपि तदतिरिक्तैः सर्वैराचार्यैः षडेव भेदाः स्वीकृताः । तत्र सादृश्यसम्बन्धेन प्रवृत्ता गौणी, सादृश्यातिरिक्तै रितरैर्निखिलैरपि कार्यकारणभावादिभिः सम्बन्धैः प्रवृत्ता तु शुद्धा—इति प्रथमतो भेदद्वयम् । अथ प्रयोजनवत्या गौण्याः केवलं भेदद्वयम्—सारोपा, साध्यवसाना चेति । प्रयोजनवत्याः शुद्धायास्तु चत्वारो भेदाः—जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना चेति । तदेवं प्रयोजनवत्या लक्षणायाः—गौणी सारोपा, गौणी साध्यवसाना, शुद्धा जहत्स्वार्था, शुद्धा अजहत्स्वार्था, शुद्धा सारोपा, शुद्धा साध्यवसाना चेति षड् भेदा भवन्ति ।

एषु भेदेषु जहत्स्वार्थायाः—जहल्लक्षणेति, लक्षणलक्षणेति चापरं नामद्वयम्, अजहत्स्वार्थायास्तु—अजहल्लक्षणेति, उपादानलक्षणेति चेत्यवधेयम् ।

तदेवं संकलय्य—निरूढाया द्वौ, प्रयोजनवत्याः षट् चेति लक्षणाया अष्टौ भेदा भवन्ति । 'अभिधावृत्तिमातृकायाः' प्रणेत्रा भट्टमुकुलेन, काव्यप्रकाश-शब्दव्यापारविचारयोः प्रणेत्रा भट्टमम्मटेन चैतावन्त एव भेदा अस्याः स्वीकृताः । स्पष्टतया प्रतीतये भेदानामेतेषां चित्र-( नकशा ) मप्यत्रोपन्यस्यते—

( अस्मिन् पृष्ठेऽवकाशाभावाच्चित्रमपरपृष्ठे द्रष्टव्यम् )

७




### किं जहदजहल्लक्षणाऽप्यस्ति ?

वेदान्तिनां मतमनुसरता वृत्तिवार्तिककारेणाप्ययदीक्षितेन तु जहदजहल्लक्षणा नामकः फललक्षणायाः सप्तमोऽपि भेदः स्वीकृतः । उक्तं च "ग्रामैकदेशदाहादौ सति 'ग्रामो दग्धः, पुष्पितं वनम्' इत्यादिप्रयोगे ग्रामादिपदस्य स्वार्थैकदेशपरित्यागेन तदेकदेशे वृत्तेर्जहदजहल्लक्षणा । दग्धभूयस्त्वादिद्योतनं फलम्" इति । तन्न विचारसहम् । अस्य भेदस्य जहत्स्वार्थातः सर्वथाऽनतिरेकात् । तथा हि काव्यप्रदीपोद्द्योते नागेशः—"वस्तुतस्तु इयं जहत्स्वार्थैव 'परार्थं स्वसमर्पणम्' इति तल्लक्षणात् । तत्र स्वसमर्पणं स्वार्थत्यागः । स च स्वार्थत्वावच्छिन्नस्य यस्य कस्यचित्, अवच्छेदकावच्छिन्नस्य वेत्यन्यदेतत् ।" इति ।

न च जहदजदत्स्वार्थायां स्वार्थत्यागात्यागयोरुभयोरपि सत्त्वात् जहत्स्वार्थाऽजहत्स्वार्थयोरन्यतरस्यामन्तर्भावे विनिगमनाविरहादतिरिक्त एवाऽयं प्रभेदोऽस्त्विति वाच्यम् । नञ्घटिताऽजहत्स्वार्थापदीयबोधस्य, 'अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वम्' इति नियममनुसृत्य जहत्स्वार्थाज्ञानसापेक्षत्वात् जहत्स्वार्थायां प्रवेशसंभवे अजहत्स्वार्थपर्यन्तं धावनस्याऽन्याय्यत्वात् । निर्णीतं चेदं वृत्तिदीपिकायाम् । ( यस्याः परिशिष्टरूपेणायं लेखः प्रकाश्यते । )

### अष्टविधलक्षणोदाहरणानि

१—**निरूढा गौणी**—'अनुकूलः' । अत्र हि 'कूलमनुगतः' इति मुख्योऽर्थः । स च कंचित् पुरुषमुद्दिश्य 'अयमस्माकमनुकूलः' इत्याद्युक्तौ बाधित एव; अस्माकं कूलासत्त्वेन तस्य कूलानुगतत्वासंभवात् । भवति त्वयमस्माकं गुणाननुगतः, तेन अनुगुणत्वे वाच्येऽनुकूलशब्दो लक्षणया प्रयुज्यत इति निर्विवादमेव । इयं लक्षणा पारम्परिकप्रवाहप्राप्तत्वान्निरूढा । सम्बन्धस्य सादृश्यरूपत्वात् गौणी ।

**२—निरूढो शुद्धा**—यथा 'नीलो घटः'। अत्र हि 'नील'शब्दस्य नीलवर्णवाचकत्वं, नीलवर्णवत्पदार्थवाचकत्वं चेत्युभयार्थत्वाभ्युपगमापेक्षया केवलवर्णवाचकत्वाभ्युपगमे लाघवम्। तथा च 'नील'शब्दस्य वर्णवाचकत्वे तस्य 'घट'सामानाधिकरण्यं बाधितम्। तेन 'नील' शब्दस्य नीलवर्णवति लक्षणा स्वीकार्या, ततश्च सिध्यति नीलशब्दस्य घट-सामानाधिकरण्यम्। इयमपि लक्षणा पारम्परिकप्रवाहप्राप्तत्वान्निरूढा। गुणगुणिनोः संब-न्धस्य समवायरूपत्वात् (सादृश्येतरसंबन्धसत्त्वेन) तु शुद्धा।

**३—प्रयोजनवती गौणी सारोपा**—यथा 'मुखं चन्द्रः'। अत्र हि 'प्रातिपदिकार्थ-द्वयस्य (प्रथमान्तस्येति त्वर्थतः प्राप्तम्, प्रातिपदिकार्थमात्रे प्रथमेतरविभक्तेरननुशासनात्) अभेदातिरिक्तः संबन्धो व्युत्पत्तिविरुद्धः' इति नियममनुसृत्य मुखचन्द्रयोरभेद एव संबन्धो भवितुमर्हति, नाऽन्यः। स चेह बाधितः, प्रत्यक्षविरुद्धत्वात्। ततश्च चन्द्रशब्दस्य-'चन्द्रसदृशे'ऽर्थे लक्षणा, 'चन्द्रसदृशं मुखम्' इति तु वाक्यार्थः। अभेदरूपस्य प्रयोजनस्य सत्त्वादियं लक्षणा प्रयोजनवती। मुखचन्द्रयोः संबन्धस्य सादृश्यरूपत्वात्तु गौणी। सारोपा त्वेवम्—उपमायाश्चन्द्रादिकमुपमानं विषयीत्युच्यते, मुखादिकमुपमेयं तु विषयः। विष-यविषयिणोः पृथङ्निर्दिष्टयोरभेद आरोप इत्युच्यते। अत्र हि विद्यते मुखचन्द्रयोर्विषयवि-षयिणोः पृथङ्निर्देश इतीयं सारोपाऽपि।

**४—प्रयोजनवती गौणी साध्यवसाना**—यथा 'पुरेऽस्मिन् सौधशिखरे चन्द्रराजी विराजते'। अत्र हि प्राकृतचन्द्रस्य सर्वदा गगनविहारित्वात् सौधशिखरगतत्वमनुपपन्नमित्ये-को बाधः; तस्य चन्द्रस्यैकत्वम्, अत्र तु 'राजी'त्युक्तेरनेकत्वमित्यपरो बाधः। तेन न प्राकृतचन्द्र इह चन्द्रशब्दार्थः, किन्तु निखिलजननयननन्दनानि कामिनीमुखानि। स चायमर्थो न संकेतित इति लक्षणा। सम्बन्धप्रयोजनयोरनन्तरोक्तयोः सत्त्वात् प्रयोजनवती गौणी च। साध्यवसाना त्वेवम्—

अध्यवसानं नाम विषयविषयिणोरन्यतरदनिर्दिश्य निर्दिष्टेऽनिर्दिष्टस्याऽभेदः। अत्र हि विषयिणश्चन्द्रस्य निर्देशः, तत्र चाऽनिर्दिष्टस्य विषयस्य मुखस्याऽभेदोऽस्त्येवेत्य-स्याः साध्यवसानात्वमव्याहतमेव।

**५—प्रयोजनवती शुद्धा जहत्स्वार्था**—यथा 'गङ्गायां घोषः'। अत्र हि 'गङ्गा'शब्दस्य भगीरथरथखातावच्छिन्नजलप्रवाहोऽर्थः, 'घोष' शब्दस्य चाऽऽभीरग्रामः। ग्रामस्य जलप्रवाहे सत्ता न संभवत्येवेति तटे लक्षणाऽभ्युपगम्यते। न चाऽनुन्मत्तस्तटश-ब्दे प्रयोक्तव्ये गङ्गाशब्दं किञ्चित् प्रयोजनमन्तरा प्रयुञ्जीतेतीह घोषे शैत्यपावनत्वादि-प्रतीतिरूपं प्रयोजनमस्तीति प्रयोजनवतीयम्। गङ्गातटयोः सादृश्यातिरिक्तस्य 'सामीप्य'-

संबन्धस्य सत्वादियं शुद्धा। जलप्रवाहरूपस्य गङ्गाशब्दमुख्यार्थस्य सर्वथा त्यागादियं जहत्स्वार्था।

विपरीतलक्षणाऽप्यत्रैव भेदे निविशते।

**६—प्रयोजनवती शुद्धा अजहत्स्वार्था**—यथा 'कुन्ताः प्रविशन्ति'। अत्र हि 'कुन्त'शब्दस्य शस्त्रविशेषे शक्तिः; 'प्रविशन्ती'त्यस्य च कुन्तकर्तृके अन्तःप्रदेशसंयोगानुकूले व्यापारे (वैयाकरणमतेन)। तादृशव्यापारकर्तृत्वं जडे कुन्ताख्ये शस्त्रविशेषे स्वतो न संभवतीति 'कुन्त'शब्दस्य कुन्तधारिपुरुषेषु भवति लक्षणा। ततश्च 'कुन्तधारिण' इति प्रयोक्तव्ये 'कुन्ताः' इति प्रयोगे विद्यते निर्दयप्रहर्तृत्वादिकं प्रयोजनमिति प्रयोजनवतीयम्।

कुन्त-कुन्तधारिणोः सादृश्यातिरिक्तस्य संयोगसंबन्धस्य सत्त्वादियं शुद्धा। कुन्तानामपि प्रवेशे सहभावात्तु अजहत्स्वार्था।

**७-प्रयोजनवती शुद्धा सारोपा**...यथा 'सुखं सज्जनसङ्गमः'। अत्र हि प्रातिपदिकार्थद्वयस्याऽभेदातिरिक्तः संबन्धो न संभवतीति सुखसज्जनसंगमयोरभेद एव संबन्धः स्वीकार्यः। स चाऽऽत्ममात्रधर्मस्य सुखस्य व्यक्तिद्वय(सज्जनाश्च वयं च) संमेलनरूपे संगमे सर्वथाऽनुपपन्न इति भवति 'सुख'शब्दस्य 'सुखकारिण्यर्थे' लक्षणा। सुखकारित्वे तादृशेतरवैलक्षण्यद्योतनं फलमिति प्रयोजनवतीयम्। सुखसज्जनसङ्गमयोः सम्बन्धस्य (जन्यजनकभावरूपस्य) सादृश्यभिन्नत्वादियं शुद्धा। विषयस्य सज्जनसङ्गमस्य विषयिणः सुखस्य च कण्ठतो निर्देशाच्चेयं सारोपा।

**८—प्रयोजनवती शुद्धा साध्यवसाना**—यथा 'कश्चिन्नयनानन्दो वृन्दावनगोचरो जयति'। अत्र हि नयनानन्दकारिणि भगवति नन्दनन्दने नयनानन्दताऽनुपपन्नेत्यस्ति स्पष्टमेव लक्षणा। प्रयोजनं पूर्ववदिति प्रयोजनवत्यपीयम्। संबन्धोऽपि तथेति शुद्धाऽपि। विषयिमात्रस्याऽऽनन्दस्योपादानाद् विषयस्य भगवतस्तु निगीर्णत्वात् साध्यवसानेयम्।

एवमेतान्युदाहरणानि बोधसौकर्यार्थमिह दर्शितानि।

## लक्षणाभेदानामुपयोगः

एषु भेदेषु निरूढासंबन्धिनो भेदद्वयस्य साहित्यशास्त्रे न क्वापि तथाविधश्चमत्कृतिजनक उपयोगो दृश्यते; तस्य व्यङ्ग्यशून्यत्वाद्, व्यङ्ग्यस्यैव च चमत्कृत्याधायकत्वात्। तेन भेदद्वयमेतदाश्रित्य न कश्चन ध्वनिः, न चाऽपि कश्चनाऽलङ्कारः समायाति दृग्विषयताम्।

प्रयोजनवत्या भेदेषु पुनर्गौणी सारोपा रूपकालङ्कारे, गौणी साध्यवसाना रूपकातिशयोक्तौ, शुद्धा सारोपा, शुद्धा साध्यवसाना चेत्युभयमुभयविधे 'हेत्व'लङ्कार उपयुज्यते। अवशिष्टे भेदद्वये शुद्धां जहत्स्वार्थामाश्रित्य 'अत्यन्ततिरस्कृतवाच्य'नामको ध्वनिभेदः, शुद्धामजहत्स्वार्थामाश्रित्य तु 'अर्थान्तरसंक्रमितवाच्य' नामकः स प्रसरीसरीतीत्यवधेयम्।

## अन्ये भेदाः सर्वभेदसंग्रहश्च

प्रयोजनवत्यां प्रयोजनस्य नियमेन व्यङ्ग्यत्वमधस्तादुक्तम्। तच्च व्यङ्ग्यं द्विविधं भवति–अगूढं, गूढं च। तदेवं मम्मटमते प्रयोजनवत्याः प्रागुक्ताः षड् भेदाः प्रत्येकं पुनर्द्वैविध्यं भजन्ते–अगूढव्यङ्ग्या, गूढव्यङ्ग्या चेति। तदनया दृष्ट्या प्रयोजनवत्याः संकलय्य द्वादश भेदा भवन्ति। तत्र शुद्धायाः पूर्वोक्तभेदद्वययोजनेन लक्षणायाः कार्त्स्न्येन चतुर्दश भेदा भवन्ति।

## साहित्यदर्पणीयभेदालोचनम्

प्राञ्जलत्वेन, साहित्यशास्त्रीयसर्वविधसामग्रीसंग्रहवत्त्वेन च साम्प्रतं साधारणसाहित्यज्ञेषु साहित्यदर्पणस्य विद्यते प्रचुरः प्रचार इति नाऽविदितं पाठकमहाभागानाम्। तदधुना सामग्र्येण समालोच्यते तत्रत्यो लक्षणाभेदप्रपञ्चः।

साहित्यदर्पणकारेण यथा प्रयोजनवत्याः शुद्धायां जहत्स्वार्थादयश्चत्वारो भेदा भवन्ति, तथा त एव चत्वारश्चत्वारो भेदा निरूढाया गौण्याः, निरूढायाः शुद्धायाः, प्रयोजनवत्या गौण्याश्चेत्येतत्त्रयस्याऽप्यभ्युपपन्नाः। तदेवं द्विविधाया निरूढाया अष्टौ, अष्टौ च द्विविधायाः प्रयोजनवत्या इति लक्षणायाः प्रथमतः षोडश भेदाः संपन्नाः। अथ कथमपि नाऽपार्यत निरूढाभेदेष्वाधिक्यमापादयितुमिति प्रयोजनवती परिगृहीता महानुभावेनानेन प्रपञ्चनाय भेदानाम्। तदेतस्याः केवलं स्वेनाऽभिमता अष्टौ भेदा गूढव्यङ्ग्यत्वागूढव्यङ्ग्यत्वेन षोडशतां तु समापादिता एव, परमेतावत भेदजालेनाऽसंतुष्यता तदेनद्धे दषोडशकं धर्मिगतत्वेन धर्मिगतत्वेन च द्वैविध्यमापाद्य प्रयोजनवती द्वात्रिंशद्भेदतां प्रापिता। तदेवमष्टौ निरूढायाः द्वात्रिंशच्च प्रयोजनवत्या इति चत्वारिंशद् भेदाः संपन्नाः,। एषां चत्वारिंशतो भेदानां पदगतत्वेन वाक्यगतत्वेन च द्वैविध्यं स्वीकृत्य लक्षणाया अशीतिभेदा अमन्यन्त साहित्यदर्पणकारेण।

स एष भेदप्रपञ्चः केवलं छात्रक्लेशवर्धनफलश्चमत्कारशून्योऽनुपयोगी च। एषु भेदेषु केचनाऽसंभविनः, परे तु चमत्कृतिशून्या निरर्थकाश्च। तथा हि—

निरूढाया यद्भेदाष्टकमभ्युपपन्नं तदनुचितमेव। निरूढाया रूढिमूलकत्वेन व्यङ्ग्यशून्यतया तद्भेदप्रपञ्चनस्य प्रयोजनरहितत्वात्। प्राचीनैस्तु शुद्धा, गौणीति भेदद्वयमपि नाऽस्याः स्वीकृतम्। ते जानन्ति स्म यत् सादृश्यसंबन्धो वा तदितरसंबन्धो वा मूलमस्या भवतु, किन्तु रूढलक्ष्यशब्दप्रचलनं जनतायामेवायतते, न तत्र वक्तुर्लेशतोऽपि स्वातन्त्र्यम्। अत एव निरूढलक्षणाविषये अभिधावृत्तिमातृकायां काव्यप्रकाशे च भट्टकुमारिलस्य—

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः॥

इति पद्यमुदध्रियत। तात्पर्यं चैतस्यैतदेव यत्प्रयोजनवत्या इव न निरूढलक्षणायाः प्रवृत्तिः कस्यचन वक्तुर्वशवर्त्तिनी, तस्याः पारम्परिकभाषाप्रवाहसंपाद्यत्वात्। तदेवंविधायामवस्थायां स एष निरूढाभेदप्रपञ्चश्छात्रजनक्लेशवर्धनमात्रफलक एवेति नाऽतिरोहितं विदुषाम्।

यद्यप्यनुपदोद्धृतकुमारिलपद्यप्रतिपादितदिशा निरूढलाक्षणिकशब्दानां संकेतितसदृशत्वात्तन्मूलभूतसम्बन्धान्वेषणं नात्यपेक्षितम्, तथापि यदि भाषाविज्ञानदृष्ट्या कश्चन जिज्ञासेत तत्, तदर्थमस्तु नाम निरूढलक्षणायाः सादृश्यतदितरसम्बन्धरूपत्वाद् गौणीत्वं शुद्धात्वं चेति द्वैविध्यमिति मध्यवर्तिभिराचार्यैरस्या भेदद्वयमादृतम्। जहत्स्वार्थत्वादिकं तु तत्र सर्वथाऽनपेक्षितम्, फलानुपधायकत्वात्। तेन द्विविधैव निरूढेत्यधिकभेदकल्पनमन्याय्यमेव।

अथ प्रयोजनवत्या भेदेषु विचार्यते। गौण्या जहत्स्वार्था, अजहत्स्वार्था चेति भेदद्वयं न संभवति, यतः सा सर्वदा जहत्स्वार्थैव भवति, नाजहत्स्वार्था। तथा हि "शुद्धैव सा द्विधा" (काव्य प्रकाश २।१०) इति प्रतीकं विवृण्वता काव्यप्रदीपकारेणोक्तम्—

"ननु शुद्धैवेत्यनुपपन्नम्। गौण्या अपि तथात्वसंभवात्। तथा हि—'गौर्वाहीक' इत्यादौ लक्षणलक्षणा तावत् स्फुटैव; उपादानलक्षणा तु-गोर्वाहीकोभयविषये 'गाव एते समानीयन्ताम्' इत्यादाविति चेत्। मैवम्। अत्रोपचारबीजं संबन्धः सादृश्यमन्यो वा? आद्ये शक्यसादृश्यस्य शक्यावृत्तितया कथं शक्यस्याऽपि लक्ष्यता, येनोपादानलक्षणा (अजहत्स्वार्था) स्यात्। (अयं भावः—अजहत्स्वार्थाया हि शक्यरूपस्य स्वार्थस्याऽत्याग आवश्यकः, अन्यथा अजहत्स्वार्थात्वमेव न स्यात्। स च सादृश्यस्य लक्षणामूलत्वे (प्राचीनमतेनैतत्) न संभवति। स्वार्थस्याऽत्यागे सादृश्यस्यासंभवात्। न हि स्वेन स्वस्य सादृश्यं क्वचिद् दृश्यते, स्वभिन्नस्यैव सदृशत्वेन संभवात्। ततश्च सादृश्यसत्त्वे स्वार्थत्यागस्य सर्वथाऽपेक्षितत्वेन सादृश्ये अजहत्स्वार्थात्वं न संभवत्येव)। अन्त्ये (सादृश्येतरसंबन्धसत्त्वे) कथं गौणी; सादृश्य-संबन्धप्रयुक्तलक्षणाया एव गौणीत्वात्।"

तस्माद् गौण्या अजहत्स्वार्था, जहत्स्वार्थेति भेदद्वयकल्पनमशुद्धमेव, तस्याः सर्वदा जहत्स्वार्थात्वेन तादृशभेदासंभवात्। तेन प्राचीनानां परिपाट्या सारोपा, साध्यवसानेति भेदद्वयमेव तत्रोचितमिति सिद्धम्। ततश्च नाऽष्टविधत्वं गौण्याः, किन्तु षड्विधत्वमेवेत्यत्र न संशयलेशोऽपि।

अथ गूढव्यङ्ग्यस्य कतिपयजनमात्रवेद्यत्वात्, अगूढव्यङ्ग्यस्य तु सकलजनसंवेद्यत्वात् चमत्कारतारतम्यं पश्यतां विपश्चितां, षड्विधायाः प्रयोजनवत्याः प्रत्येकं द्विविधत्वेन काव्य-

प्रकाशोक्तरीत्या द्वादशविधत्वं भवेदभ्युपगन्तव्यम्, किन्तु धर्मधर्मिगतत्वेन, पदवाक्यगतत्वेन च भेदप्रकल्पनं तु निरर्थकमेव, ईदृशभेदप्रकल्पनस्य चमत्कारशून्यत्वात्, लक्षणाया वस्तुतोऽर्थसम्बन्धत्वेन साक्षात् पदवाक्यगतत्वाभावात्, धर्मधर्मिगतत्वादिकल्पनावत् जाति-गुण-क्रिया-द्रव्यादिगतत्वेनाऽपीदृशनिरर्थकाऽनेकभेदप्रकल्पनसम्भवाच्चेति दर-मुकुलितनयननलिनैर्मार्मिकमहाभागैर्ध्येयम्।

## उपसंहारः

तदेवमेतस्य साहित्यदर्पणीयभेदप्रपञ्चस्य कस्मिंश्चिदंशेऽशुद्धत्वादितरत्रांशे तु प्रयोजनशून्यत्वादन्ततो गत्वा लक्षणायास्त एव पूर्वोदिताश्चतुर्दश भेदा अवशिष्यन्ते। सम्प्रतिच्छात्रजनबोधसौकर्याय चतुर्दशभेदचित्रमधस्तादुपन्यस्य समाप्यतेऽयं लेखः।




इति शुभम्।

संपादकस्य परिशिष्टनिबन्धश्च

## परिचयः

आसन्नासन्नपृथ्वीपरिवृढपरिषत्पूज्यपादारविन्दा
बुन्दी-टोडाधिपेभ्यः सबहुमति समासादिताजीवनाश्च ।
ऋग्वेदेऽधीतिनः सत्कुशिककुलभुवः ख्यातवैश्वानरत्वा
ज्ञातेर्नाम्नाऽथ धाम्नाऽप्यतुलितयशसो लोकनाथादिमिश्राः ॥

येषामभूदभिजनो जनवन्दनीया
जन्मक्षितिर्मधुपुरी मधुसूदनस्य ।
लोकोत्तरेण कविकर्मणि नैपुणेन
ये यस्त्रियश्च जगति प्रथितप्रभावाः ।

तेषां कुले कलितकीर्त्तिकुलेऽवलेप-
हीनः स्वधर्मनिरतः सन्नवासविघ्नः ।
श्रीसूर्यमल्लधनिकप्रवरात्मजश्री-
श्रीनाथसूनुरभवन्मथुरादिलालः ॥

तस्यात्मजन्मा संप्राप्तसाहित्याचार्यसत्पदः ।
पुरुषोत्तमशर्माख्यश्चतुर्वेदीति विश्रुतः ॥

अनेकराजपुत्राणां शिक्षको राजमानितः ।
शुद्धाद्वैताख्यवेदान्तदर्शने विहितश्रमः ॥

रसगङ्गाधरो येन भाषायां समनूदितः ।
साहित्यमार्मिकैर्यस्य मार्मिकत्वं प्रशस्यते ।

तस्यायं विदुषां चित्तविनोदाय समर्पितः ।
प्रयासः पुष्पमालेव सौमनस्येन गृह्यताम् ।

—:०:—

# राजस्थान पुरातन ग्रन्थमाला

## प्रकाशित ग्रन्थ

१ प्रमाणमञ्जरी – तार्किकचूड़ामणि सर्वदेव । २ यन्त्रराजरचना – महाराजाधिराज जयसिंहदेव कारिता । ३ कान्हडदे प्रबन्ध – महाकवि पद्मनाभ । ४ क्यामखांरासा – नवाब अलफखां (कविवर जान) । ५ लावारासा – चारण कविया गोपालदान । ६ महर्षिकुलवैभवम् – विद्यावाचस्पति स्व. श्री मधुसूदनजी ओझा । ७ वृत्तिदीपिका – मौनि कृष्णभट्ट ।

## प्रेस में

त्रिपुराभारतीलघुस्तव – सिद्धसारस्वत लघुपण्डित । २ बालशिक्षा व्याकरण – ठक्कुर संग्रामसिंह । ३ करुणामृतप्रपा – महाकवि ठक्कुर सोमेश्वरदेव । ४ पदार्थरत्नमञ्जूषा – पं. कृष्णमिश्र । ५ शकुनप्रदीप – पं. लावण्यशर्मा । ६ उक्तिरत्नाकर – पं. साधुसुन्दर गणी । ७ प्राकृतानन्द – पं. रघुनाथ कवि । ८ ईश्वरविलासकाव्य – पं. कृष्णभट्ट । ९ चक्रपाणिविजयकाव्य – पं. लक्ष्मीधर भट्ट । १० काव्यप्रकाश – भट्ट सोमेश्वर । ११ तर्कसंग्रहफक्किका – क्षमाकल्याण गणी । १२ कारकसंबन्धोद्योत – पं.रभसनन्दी । १३ शृंगारहारावलि – हर्षकवि । १४ कृष्णगीतिकाव्यनि – कवि सोमनाथ । १५ नृत्यसंग्रह – अज्ञातकर्तृक । १६ नृत्यरत्न कोश – महाराजाधिराज कुंभकर्णदेव । १७ नन्दोपाख्यान – अज्ञातकर्तृक । १८ चान्द्रव्याकरण – चन्द्रगोमी । १९ शब्दरत्नप्रदीप – अज्ञातकर्तृक । २२ रत्नकोश – अज्ञातकर्तृक । २१ कविकौस्तुभ – पं. रघुनाथ मनोहर । २२ एकाक्षरकोशसंग्रह – विविधकविकर्तृक । २३ शतकत्रयम् – भर्तृहरि, धनसारकृत व्याख्यायुक्त । २४ वसन्तविलास – अज्ञातकर्तृक । २५ दुर्गापुष्पाञ्जलि – म. म. पं. दुर्गाप्रसादजी द्विवेदी । २६ दशकण्ठवधम् – म. म. पं. दुर्गाप्रसादजी द्विवेदी । २७ राजविनोद काव्य – कवि उदयराज । २८ गोरा बादल पदमिणी चऊपई – कवि हेमरतन । २९ बांकीदासरी ख्यात – महाकवि बांकीदास । ३० मुंहता नेणसीरी ख्यात – मुंहता नेणसी, इत्यादि ।

प्राप्तिस्थान – सञ्चालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर ।

काशिराज मुद्रणालय, रामनगर में साहित्याचार्य पं० पुरुषोत्तम शर्मा चतुर्वेदी द्वारा मुद्रित ।
मुखपृष्ठादि ४ पृष्ठ के मुद्रक—धनपतराय शर्मा, हनुमान प्रेस, जयपुर ।